## IN EXCUSE OF
## TRANSLATION INTO SANSKRIT

"The ideas must be taught in the language of the people : at the same time, Sanskrit education must go on along with it, because the very sound of Sanskrit words gives a prestige and a power and a strength to the race....Even the great Buddha made one false step when he stopped the Sanskrit language from being studied by the masses... He spoke in the language of the people.....It spread the ideas quickly......But along with that, Sanskrit ought to have spread. Knowledge came but the prestige was not there, culture was not there. It is the culture that withstands shocks, not a simple mass of knowledge."—

*Swami Vivekananda*

भारतीयसवकार-शिक्षा-मन्त्रकप्रदत्तार्थसाहाय्येन

# प्राच्य-पाश्चात्त्यम्

# PRĀCYA-PĀŚCĀTTYAM

*(Sanskrit translation of Swami Vivekananda's Original Bengali work, Prācya O Pāścāttya)*

स्वामि-विवेकानन्दलिखितं

**डः सीतानाथ-गोस्वामिना**

वङ्गभाषातः संस्कृतभाषयाऽनूदितम्

TRANSLATED BY

DR SITANATH GOSWAMI, M.A.

(GOLD MEDALLIST) D. PHIL.,

*Veda-Vedānta-Vyākaraṇatīrtha, Reader, Jadavpur University, Author of Vedāntadarśane Paramārthatattva, Editor of Īśopaniṣad, Kenopaniṣad, Tattvasandarbha etc., Translator of Vartamān Bhārat etc.*

*AUGUST, 1968*

Rs. 3·00 रूप्यकत्रयम्

# भूमिका

'प्राच्य ओ पाश्चात्य' इत्याख्यस्य स्वामिविवेकानन्दरचितस्य वङ्गभाषीय-ग्रन्थस्य संस्कृतानुवादः प्रकाश्यते। विद्यालये पठतैव मया ग्रन्थस्यास्य पठने प्रयत्न आस्थितः। तदानीं यत् किमप्यवगतं तेनैव मुग्धोऽहमासम्। परिणतेऽपि वयसि पुनः पुनरध्ययनेनापि चित्तं न तुष्टिं गच्छति किन्तु सर्वदा नूतनवत् प्रतिभात्ययं ग्रन्थ इत्यसामान्यत्वमेतस्य नूनं वक्तव्यम्। प्राच्यशब्देन स्वामि-पादैर्मूलतो भारतवर्षमेवाभिप्रेतम्। सुविशालोऽयं देशः, सुप्राचीनं गौरवमयं चैतिह्यमिति न सहसा कश्चनैतस्मिन् विषये वक्तुं प्रभवेत्। येन खलु सुनिपुणं शास्त्रजातमधीतं, धर्मसंस्कृतीतिहासादिकं सर्वं सश्रद्धं समालोचितं, भारतीयसमाजः कात्स्न्र्येन प्रत्यक्षीकृतः, यस्य च ज्ञानराशिर्न केवलं ग्रन्थतः संकलितः किन्तु स्थानात् स्थानान्तरं परिभ्रम्य ज्ञानमर्जितं येन तेनैव पुरुषसिंहेन यथार्थतो दाढर्येन किञ्चिद् वक्तुं शक्यम्। जनाश्च सर्वे तस्योक्तिरभ्रान्तेति मन्यमानास्तदनुसारेण जीवनं यापयन्ति। ब्रुवन्तु नाम कति वक्तारः, उपदिशन्तु नाम भूयांस आचार्यपदमलङ्कुर्वाणाः परन्तु यदि वक्तृषु त्यागस्तपश्च न स्यात्तदा सर्वथा विफलोऽयं वाग्विन्यास इति प्रत्यहं प्रत्यक्षीक्रियतेऽस्माभिः सर्वैः। स्वामिपादानां लेखे तथा भाषणेऽग्निः प्रज्वलित इवानुभूयते, दोषं पापं चानुतिष्ठन्तो जना मन्त्रमुग्धवन्नताननाः शृण्वन्ति स्वामिकृतां भर्त्सनाम्। यद्वस्तु प्रतिक्षणमस्माभिरनुभूयते यत्र चाभ्यस्ता वयं जातास्तत्र विद्यमानं दोषकूटमपि नास्माकं दृष्टिपथमायाति। केवलं कृतश्रमा निष्पक्षपातदृष्टयः क्रान्तदर्शिनः स्वल्पा एव पुरुषास्तत्राङ्गुलिप्रदर्शनेन सर्वान् बोधयन्तीति पश्चाज् जनैस्तदवगम्यते। स्वजातेः स्वधर्मस्य दोषप्रदर्शने कृते भवत्यात्मीयहानिरिति सम्यग् विज्ञायापि स्वामिपादैर्निर्भीकतया सर्वमुट्टङ्कितम्।

पाश्चात्यदेशस्य दोषजातमपि तथैवोन्मील्य प्रदर्शितम्। यत्र कुत्रचन पाश्चात्यानां दोषो विद्यते तत्र तत् कथमिति सयुक्तिकं बभाषे। तत्र यदि वयं निर्दोषास्तर्हि तदपि प्रख्यापितमेवमेव यत्रास्मदोयो दोषस्तत्र पाश्चात्यानां निर्दोषत्वेऽकुण्ठितं तदुच्यत इत्यपूर्वोऽयं स्वामिपादस्य प्रयत्नः।

विशेषत: प्रतिपादितमस्मिन् ग्रन्थे यदेतस्य देशस्य जातीयो भावः खलु धर्मे निहितः। अशेषैः प्रमाणैर्निःसंशयमुपपादितं यदत्रानीत आघातो न कथमपि भारतीयजनैर्हिन्दुभिर्वा सोढव्यः। सम्यगेतदुत न, प्राणकेन्द्रमितः समाकृष्यान्यत्र स्थापने शोभनं भवेन्न वेति भिन्नदेशीयानां प्रश्नराशिर्निरर्थकः पर्यवसितो यतो वर्षाणां सहस्रेभ्यः पूर्वं जीवनस्रोतो यथा येन पथा प्रचलितं न तस्मादन्यतो गमनं सम्भवि। (१९ पृः)। वर्तमाने काले सर्वैरेतस्य पठनं कर्तव्यम्, उद्देश्यविशेषेण प्रणोदिता जना जानन्तोऽपि तत्तत्त्वमन्यथा प्रचारं कुर्वन्तीति नितान्तं दुनोति नो मनः।

एतस्मादनुवादग्रन्थात् पूर्वमपि स्वामिपादानां 'वर्तमानभारत'-ग्रन्थस्यानुवादः कृत आसीत्तत्र च सामान्यजनानां विदुषां तथा सर्वकाराणां प्रोत्साहनेन पुनरत्र कृतयत्नाः स्मः। वर्तमानभारतस्य द्वितीयं संस्करणं सम्प्रति प्रकाशमगमत्। एतस्य 'प्राच्य-पाश्चात्य'-ग्रन्थस्य मुद्रणव्ययो बाहुल्येन भारतसर्वकारैः प्रदीयत इति सहर्षं ब्रूमः।

प्राच्य-पाश्चात्यग्रन्थस्य रचना पाश्चात्यदेशेऽवतिष्ठमानैः स्वामिपादैः कृतेति मन्यामहे यतो ग्रन्थे बहुत्र 'एषु देशेषु' ( २३ पृः ), 'एतद्देशीयः' (२३, ६२ पृः ) 'एतद्देशे' (४४ पृः ) इत्यादिभिः पाश्चात्यदेशः पाश्चात्यजनश्च बोधितः।

अनुवादकर्ममात्रस्येदमौत्सर्गिकमसौकर्यं यद् मूलगतो भावो भाषावैचित्र्यादिकं न सर्वथा भाषान्तरे समुपनिबन्धुं शक्यते। तत्रापि स्वामिपादानां कृतौ भावभाषादीनां यदनितरसाधारणं गाम्भीर्यं दृश्यते तस्य भाषान्तरे प्रतिफलनं नितान्तं दुःशकमिवेति भाति। असामान्या खलु तेजस्विता स्वामिपादानाम्, आदिशन्त इव ब्रुवन्ति कृत्स्नं वचनजातम्। कुत्रचन संवाद इव प्राञ्जलो भाषाविन्यासः प्राणवानिति प्रतीयते।

इंरेजी-फरासीप्रभृतिशब्दानां सामान्यतो नानुवादः कृतः, अविकृतस्वरूपेणैव गृहीतास्ते शब्दाः। येषां तु शब्दानां संस्कृतरूपान्तरमन्यैः सर्वैः परिगृहीतमेव, प्रायशो नास्ति विप्रतिपत्तिस्तादृशाः सर्वकारादिवत् केचन शब्दाः Government इत्यादीनां स्थाने समुपात्ता एव ( २५ पृः )। वङ्गभाषीया अपि धनेजिरेप्रभृतयः (३३ पृः) शब्दास्तथैव संस्कृतानुवादेऽपि स्वीकृताः। जामा-इजार-पिरानादीनां (४१ पृः) शब्दानां भाषान्तरीकरणे यथाशक्ति प्रयतितम्।

संस्कृतेतरशब्दानां यत्र समुल्लेखः क्रियते तत्र षत्वणत्वादिविधयो नावलम्बिताः। इरानशब्दो जार्मानशब्दो ग्रीकानामिति वा नात्र णत्वेन पठ्यते। मलेरिया वा म्यलेरिया वा म्यालेरिया वेति कथं लेखनीयमित्यत्र पण्डितानां

नैकमत्यमिति कृत्वा वाहुल्येन मूलस्थंवर्णा एव समादृता अस्मिन्ननुवादग्रन्थे। विरामचिह्नादीनि मूले भूयांसि विद्यन्ते परन्तु संस्कृतभाषायां नैतावन्त्यपेक्षिता-नीति वहुत्र तानि वर्जितानि । वङ्गभाषीया शब्दशैली (idiom) संस्कृतेऽपि कथं नाम संरक्ष्येतेत्येतदर्थं भूयान् प्रयत्नः कृतस्तथापि तत्रास्मदीयः श्रमः सफला न वेति विद्वद्भिर्विचार्यम्। "स्वस्य क्रोडे सूपं समाकर्षति" इत्याक्षरिकेऽनु-वादे (१६ पृ:) भावो न प्रतिपाद्येतेति "स्वानुकूल्यमभिलषती"त्यनुवादः कृतः। "त्यज मातः, क्रन्दनेन जीवामि" (३६ पृ: ) इत्यत्राक्षरिकेणानुवादेनापि भावोऽवगन्तुं शक्यत इति तथैव कृतम्।

भूयसां कथ्यभाषागतशब्दानां समञ्जसं प्रयोगो भाषायाः सजीवत्वमेव विदधाति। प्रारम्भेऽत्रधृतस्य भावराशेः प्रकाशार्थं संस्कृतशब्दा एवोपयोगिन इति तादृशाः शब्दास्तत्र व्यवहृताः। स्वामिपादैरेवं खलु शब्दाः प्रयुक्ता ये कदाचिदेव साहित्ये प्रयुज्यन्ते, तथापि स्थानविशेषे तेषां यथार्थप्रयोगादपूर्वं भावगाम्भीर्यं रसपुष्टिश्च सम्पादितम्। मोद्दा ( ५१ पृ: ) द्यालेर गाये ( ५१ पृ: ) कर्तात्ति (५९ पृ:) सेँधुच्छे (१५ पृ:) काँडि (४३ पृ:), आगापास्तला ( १९ पृ:) कुपोकात् (२६ पृ:) खामका (६२ पृ:) इत्यादयः शब्दा विशेषेण द्रष्टव्याः। राम, रामचन्द्र इत्याद्याश्चर्यबोधकाः शब्दाः स्वामिपादानां वैशिष्ट्यं द्योतयन्ति ( १९ पृ:, २० पृ., २९ पृ: ) । पुनरलीक-मित्यर्थमवगमयितुं 'अश्वस्य डिम्बः' त्यसकृदस्मिन्नेव ग्रन्थे समुल्लिखितम् (१३ पृ:, ५७ पृ:)। ततः किम्, तस्मिन् किं, तेन किं स्यात् इत्यादयः प्रयोगाः स्वामिपादस्य ग्रन्थे प्रायो दृश्यन्ते ( २१ पृ:, २२ पृ:, १७ पृ:)। अलं दृष्टान्तबाहुल्येनेति तिष्ठतु भाषाविचारः ।

अनुवादार्थं शतवार्षिकसंस्करणमेव मूलतः परिगृहीतम्। यत्र तु संस्करण-विशेषेऽन्यथात्वं परिदृष्टं तत्र तद् विशेषेण विविच्य को नाम पाठः साधीयानिति टिप्पन्यां विचारितम्। इंरेजीभाषायां हिन्दीभाषायामपि योऽनुवादग्रन्थः प्रचलितस्तस्यापि प्रयोजनवशात् तत्र तत्र टिप्पन्यां समुल्लेखो दृष्टो भविष्यति।

यत्र कुत्रचन संस्कृतग्रन्थादुद्धृतिः कृता स्वामिपादैस्तस्य सर्वस्य मूलनिर्देशो यथासम्भवं कृत एव। अनुद्धृतेऽपि सति तत्र तत्र यदि सूचनामात्रं कृतं कस्यचन तत्त्वस्य तर्हि तदपि टीकायां विनिवेशितम्। प्राच्यपाश्चात्त्येतिहास-माश्रित्य समुल्लिखितं प्रायः सर्वं तत्त्वं टिप्पन्यां विस्तरेण प्रति-पादितम्।

ग्रन्थप्रकाशार्थं मदीयश्छात्रो महाविद्यालयाध्यापको यादवपुरविश्वविद्यालयाध्यापकश्च श्रीहिमांशुनारायणचक्रवर्ती सर्वथा साहाय्यं कृतवानिति तस्मै भूयस्य आशिषः सन्तु। श्रीभगवच्चरणयोस्तस्य कल्याणं काङ्क्ष्यते। चिकित्साविद्यामधीयाना श्रीमती उमा चक्रवर्ती मुद्रणकार्ये यथेष्टमानुकूल्यं कृतवतीति तस्या मङ्गलं काम्यते

नवद्वीपः
फाल्गुनी पूर्णिमा
१३७४ वङ्गाब्दस्य

श्रीसीतानाथ-गोस्वामि-देवशर्मणा

# प्राच्य-पाश्चात्त्यम्

सलिलविपुलोच्छ्वासमयी नदी राजते, शोभते च नदीतटे नन्दनविनिन्दित-मुपवनम्, तदन्तरपूर्वकारुकार्यमण्डितो रत्नखचितो मेघस्पर्शी मर्मरप्रासादः; पार्श्वे पुरतः पश्चाच्च भग्नमृन्मयप्राचीरं जीर्णच्छादनं दृष्टवंशकङ्कालं कुटीरकुलम्, इतस्ततः शीर्णदेहाश्छिन्नवसना युगाद् युगान्तरं व्याप्य व्यक्तनैराश्यवदना नरा नार्यश्च, बालका बालिकाश्च; अन्तरान्तरा विद्यमानाः समानधर्माणः समशरीरा गो-महिष-बलीवर्दाः, परितश्चासारोच्छिष्टराशिः—एतदेवास्माकं वर्तमानं भारतम्।

अट्टालिकावक्षसि जीर्णं कुटीरम्, देवालयक्रोडे कालुष्यस्तूपः, पट्टशाटावृतस्य पार्श्वचरः कौपीनधारी, बह्वन्नतृप्तं परितः क्षुत्क्षामा ज्योतिर्हीना कातरा दृष्टिः—इयमेव नो जन्मभूमिः।

विसूचिकाया भीषणमाक्रमणम्, महामार्या उत्सादनम्, म्यालेरियारोगेणा-स्थिमज्जायाश्चर्वणम्, सहजातमिव विराजमानमनशनमर्धाशनं च, अन्तरान्तरा महाकालरूपस्य दुर्भिक्षस्य महोत्सवः, रोगशोकयोः कुरुक्षेत्रम्, आशोद्यमानन्दोत्-साहानां कङ्कालैः परिप्लुतं महाश्मशानम्, तत्र च ध्यानमग्नो मोक्षपरायणो योगी—दृश्यते ह्येतद् इउरोपीयपर्यटकेन।

कोटीनां त्रिंशद् मानवप्राया जीवाः खलु बहुशताब्दीपर्यन्तं स्वजातीयानां विजातीयानां स्वधर्मिणां विधर्मिणां च पदभरैर्नितरां निष्पीडिताः, दासोचित-श्रमसहाः, दासवन्निरुद्यमाः, आशाहीनाः, अतीतहीनाः, भविष्यद्विहीनाः, अधुना येन केन प्रकारेण प्राणधारणमात्राभिलाषिणः, दासवदीर्ष्यापरायणाः, स्वजनोन्नतिम-सहमानाः, हताशवद् वीतश्रद्धाः, विश्वासहीनाः, शृगालवन्नीचचातुरीप्रतारणा-सहायाः, स्वार्थपरताया आधारस्वरूपाः, बलवतां पदलेहकाः, स्वापेक्षया दुर्बलानां यमस्वरूपाः, निर्बलनिराशोचितकदर्यभीषणकुसंस्कारपूर्णाः, नैतिकपृष्ठास्थिहीनाः, पूतिगन्धिमांसखण्डव्यापिकीटकुलानीव भारतशरीरे परिव्याप्ताः—इत्येव इंरेजराजपुरुषाणां दृष्टावस्मदीयं चित्रम्।

नवबलमधुपानमत्तो हिताहितबोधहीनो हिंस्रपशुकल्पो भयानकः स्त्रीजितः कामोन्मत्त आपादमस्तकं सुरासिक्त आचारहीनः शौचहीनो जडवादी जडसहाय-श्छलेन बलेन कौशलेन च परदेशधनापहरणपरायणो नास्तिको देहात्मवादी देह-पोषणैकजीवनः—एवं खलु भारतवासिनां दृष्टौ पाश्चात्त्योऽसुरः।

गतेयं कथा पक्षद्वयस्य बुद्धिहीनानां वहिर्दृष्टीनां च जनानाम्। इउरोपीयो विदेशीयः सुशीतलं सुपरिष्कृतं सौधशोभितं नगरांशमधिवसति, अस्माकं 'नेटिभ'-वाच्यानां पल्लीं स्वदेशस्य परिष्कृतेन परिच्छन्नेन नगरेण तुलयति। भारत-वासिभिः सह तेषां यः संसर्गः स केवलं केनचिदंशविशेषेण यः खल्वंश इंरेजप्रदत्तां वृत्तिं भुङ्क्ते। किञ्च, यदिदं दुःखं दारिद्र्यं च भारतवर्षे विद्यते न तद् वस्तुतः पृथिव्यां कुत्रापि विद्यमानम्। मलमुत्करश्च परितः पतितमस्त्येव। इउरोप-वासिनां दृष्टौ नैतद् विश्वासास्पदं यदेतस्य मलस्य, एतस्या दासवृत्तेर्नीचताया-श्चान्तः किञ्चन शोभनमपि विद्येत।

अस्माभिर्दृश्यते यदेतैः शौचं नास्थीयते, आचमनं न क्रियते, यत् किमपि भुज्यते, कृत्याकृत्यविवेको नाश्रीयते, मद्यं पीयते, कामिनीं कक्षे कृत्वा विषमं नृत्यते। अत एतस्या जातेः किं वत शोभनम्?

द्वयी चेयं दृष्टिर्वाह्या, अन्तर्गता वार्ता नावगता। विदेशीयो नास्मत्समाजे मेलनार्थं गृह्यते, म्लेच्छ इत्यभिधीयते, वयं च पुनः 'कृष्णा दासाः' इति तेषां घृणा-विषया भवामः।

एतयोरुभयोरेव मध्ये किञ्चित् सत्यं नूनं विद्यमानं तथापि पक्षद्वयमेव नेत-रस्याभ्यन्तरं स्वरूपं दृष्टवत्।

प्रत्येकस्य मानुषस्य कश्चन भावो विद्यते, यस्य खलु भावस्यैव वहिःप्रकाश-स्वरूपो भाषास्वरूपश्चायं वाह्यो मानुषः। एवमेव जातेरप्यस्ति कश्चिज्जातीयो भावः। भावोऽयं जगतः कार्यं साधयति—संसारस्थित्यर्थमेष सप्रयोजनः। यस्मिन् दिवसे खल्वेतत् सापेक्षत्वमपगमिष्यति तस्मिन् दिवसे सेयं जातिर्व्यक्तिर्वा नाश-मेष्यति। वयं भारतवासिनो यदेतावद् दुःखं दारिद्र्यं चान्तर्वहिश्च क्लेशं सोढ्वा जीवितास्तस्यार्थः—अस्ति नः कश्चन जातीयो भावो यो जगदर्थमधुनाप्यावश्यकः। इउरोपीयानां तथैव कश्चन जातीयो भावो विद्यते यदभावान्न संसारश्चलिष्यति; अत एव खलु ते प्रवलाः। किं सर्वथा शक्तिहीना मनुष्या जीवन्ति? जातिर्हि व्यक्तीनां समष्टिमात्रम्; सर्वथा निर्वला कर्महीना चेयं जातिर्जीविष्यति वा? सहस्रं वर्षाणि विविधासु विपत्स्वपि विद्यमाना जातिरियं कथं न मरणमुपेता? अस्माकं रीतिर्नीतिश्च यद्येतादृशी निन्दिता तर्हि वयमियति काले कथं नोत्सन्नाः? किं विदेशीयानां विजेतॄणामस्मिन् प्रयत्ने काचन त्रुटिरासीत्? तथाप्यन्येषु देशेषु यथा जातं तथात्र सर्वे हिन्दवः कथं न निःशेषेण मृता लुप्ताश्च? भारतस्य क्षेत्रं जनमानवहीनं कथं न जातम्, विदेशीयाः खलु तदानीमेवागत्य कर्षणादिकमुपजीव्य वसेयुः, यथा आमेरिकायाम्, अस्ट्रेलियायाम्, आफ्रिकायां च प्रचलितम्, चलति च?

ननु रे विदेशीय, यादृशं वलवन्तं खल्वात्मानं मन्यसे तत्तु कल्पनामात्रम्। भारतस्यापि वलमस्ति, द्रव्यमस्ति—एतदेव प्रथमतया वोध्यम्। वोध्यं च पुनर्यदधुनाप्यस्माभिर्जगतः सभ्यताभाण्डारे किञ्चिद् देयमस्ति, तदर्थं च वयं जीवामः। एतच्च युष्माभिरपि सम्यग् वोध्यं ये खल्वन्तर्वहिश्च इउरोपीयत्वेन सज्जिताः सन्तः क्रन्दनपरा ब्रूथ—वयं हि नरपशवः,अहो यूयम् इउरोपीयाः, अस्मानुद्धरतेति। यीशुरागत्य भारते विद्यमान इति 'हाँसिन होँसेन' इत्युच्यते। अरे वत्स, यीशुरपि नागतः, नापि जिहोवा सम्प्राप्तः, न वाऽगमिष्यति। ते चाधुना तेषां गृहकर्म निर्वाहयन्ति, अस्माकं देशमभ्यागमनस्य समयो नास्ति। अस्मिन् देशे स एव वृद्धः शिव उपविष्टो राजते, माता च कालिका छागमत्ति, वंशीधारी च वंशीं वादयति। सोऽयं वृद्धः शिवः षण्डमारुह्य भारतवर्षादितः सुमात्रां वोर्णिओ-देशं सेलिविसभूखण्डम्, अस्ट्रेलियाम् आमेरिकायाः प्रान्तं यावड् डमरु वादयन्नेकदा बभ्राम, अन्यतश्च तिव्वतं चीनदेशं जापानं साइवेरियादेशं यावत् स एव वृद्धः शिवः षण्डं ताडयन्नासीदधुना च ताडयति। सेयं माता कालिका या चीन-जापानपर्यन्तं सर्वत्र पूजां लभते सैव यीशोर्माता मेरीति खृष्टीयैः पूज्यते। योऽयं हिमालयपर्वतो दृश्यते तस्यैवोत्तरेण विद्यते कैलासो यत्र वृद्धस्य शिवस्य प्रधाना वसतिः। तं कैलासं रावणो दशाननो विंशहस्तोऽपि न चलयितुं शशाक, किं तत् कर्म खृष्टधर्मप्रचारकेण हेयेन केनापि कर्तुं शक्यते? असौ वृद्धः शिवो डमरुं वादयिष्यति, माता कालिका छागमत्स्यति, कृष्णश्च वंशीं वादयिष्यति—चिरन्तनमेतदस्य देशस्य। यद्येतन्न भवद्भ्यो रोचते, गच्छन्तु, दूरमपसरन्तु। द्वित्राणां पुरुषाणां कृते यावन्तो देशवासिनः किमस्थिमज्जापर्यन्तं क्लेशजर्जरिता भविष्यन्ति? चरित्वा भक्ष्यताम्। एतावद् विशालं जगत् पतितं नु विद्यते? तन्न क्रियते। सामर्थ्यं कुत्र? अहो परिहास एव यत्तस्यैव वृद्धशिवस्यान्नं खादिष्यन्ति, कृतघ्नतां च करिष्यन्ति, जयं गास्यन्ति च यीशोः। यदिदम् इउरोपीयानां सविधे नासाक्रन्दनमारभ्यते 'वयं हि नितरां नीचाः, वयं चात्यन्तमपदार्थाः, अस्माकं सर्वमेव गर्ह्यम्' इति सत्यवादिनां युष्माकं तद्वचः सत्यं भवितुमर्हति किन्तु तत्र वाक्ये 'वयम्' इत्यस्मिन् सर्वे देशवासिनः कथमन्तर्भाव्यन्ते? सेयं कीदृशी शिष्टता रे वत्स!

प्रथमतयाऽवगन्तव्यं यन्नास्ति कोऽपि गुणो यत्र कस्यचन जातिविशेषस्यैवाधिकारः। परन्तु यथा कस्मिंश्चित् पुरुषे दृश्यते तथा कस्याञ्चन जातावपि गुणविशेषस्य केवलमाधिक्यं प्राधान्यं वा विद्यते।

# धर्मो मोक्षश्च

अस्माकं देशे मोक्षेच्छायाः प्राधान्यं पाश्चात्त्ये तु धर्मलिप्सायाः। अस्माभिः किमभिलष्यते ? मुक्तिः। तैः किं प्राथ्यंते ? धर्मः। धर्मशब्दो ह्यत्र मीमांसक-रीत्या व्यवह्रियते।

को नाम धर्मः ? यत् खल्विह परत्र च सुखभोगं प्रवर्तयति। धर्मो हि क्रिया-मूलकः। धर्मश्च मानुषमहोरात्रं सुखान्वेषणाय प्रेरयति, सुखार्थं च श्रमयति।

को नाम मोक्षः ? यत् खल्वैहिकं पारत्रिकं च सुखं दासोचितत्वेनोपदिशति। अस्याः प्रकृतेर्नियममतीत्य नायं लोको विद्यते न वा परलोकः। तदनयोर्दास्ययो-र्भेदोऽयम्—एकं शृङ्खलमायसमपरं च सौवर्णम्। ततः प्रकृतेरन्तर्भूतत्वाद् विनश्वरं तत् सुखं न स्थास्यति। अतो मुक्तेन भवितव्यम्, प्रकृतेर्बन्धनाद् बहिर्गन्तव्यम्, शरीरबन्धनाद् बहिर्गन्तव्यम्, दासत्वमपाकरणीयम्। अयं मोक्षमार्गः केवलं भारते विद्यते, नान्यत्र। अतो यद् भवद्भिः श्रुतं मुक्तपुरुषो भारत एव विद्यते नान्यत्रेति तद् यथार्थम्। पश्चादन्यत्रापि भविष्यतीति सत्यम्—तच्चानन्दकारणम्। एकदा भारतवर्षेऽस्मिन् धर्मस्य मोक्षस्य च सामञ्जस्यमासीत्। तदा युधिष्ठिरा-र्जुनदुर्योधनभीष्मकर्णादिभिः सह व्यासशुकजनकादयोऽप्यासन्। बौद्धोत्तरकालाद् धर्मः सर्वथाऽनादृतो बभूव, केवलं मोक्षमार्गः प्रधानो जातः। अतश्चाग्निपुराणे रूपकच्छलेनोक्तम्—गयासुरः (बुद्धः[१]) सर्वानेव जनान् मोक्षमार्गं प्रदर्श्य जगद् ध्वंसोन्मुखमकरोत्। अतो देवाश्छलमाश्रित्य तमपुनरावृत्तये शमयाम्बभूवुः। अयं सारो यद्देशस्यास्य यस्या दुर्गतेर्वार्ता सर्वेभ्यो वक्त्रेभ्यः शृणोषि सा दुर्गति-र्धर्मस्यैवाभावः। यदि सर्वे देशवासिनो मोक्षधर्ममभ्यस्यन्ति तर्हि शुभं तत्; किन्तु तन्न भवेत्, असति भोगे त्यागो न भवितुमर्हति, प्रथमं भोगमनुतिष्ठ पश्चात्त्यागो भविष्यति। नोचेदकारणं देशस्य सर्वे जनाः साधवो जाता इति 'इतो भ्रष्टस्ततो नष्टः'। यदा बौद्धराज्य एकैकस्मिन् मठे लक्षं साधवोऽभवंस्तदानीमेव देशो-ऽयमुत्सन्नासन्नो बभूव। बौद्धखृष्टानमुसलमानजनानामयं भ्रमो यत् सर्वेषामेव कृते स एवैको विधिरेको नियमः। महानेवासौ भ्रमः। जातिव्यक्तिप्रकृति-भेदेन शिक्षाव्यवहारनियमाः सर्वे भिन्नाः। बलादेकीकरणचेष्टया किम् ? बौद्धै-रभिहितम् 'मोक्षसदृशं न किमपि विद्यते, तदागम्यतां सर्वैर्मोक्षो गृह्यताम्'। अहो किमेतत् सम्भाव्यते ? 'त्वं खलु गृहस्थो मानुषः, एतादृशैर्वचनैस्तव न तादृशं प्रयोजनं विद्यते, अनुष्ठीयतां त्वया तव स्वधर्मः'—एतदुक्तं हिन्दूनां शास्त्रे। सङ्गतमेव हि तद्वचः। हस्तमात्रं लम्फप्रदानं न शक्यते, लङ्कायाः पारं गमिष्यसि ! किमेतत् कर्मोचितं वचनम् ? द्वयोर्मानुषयोर्मुखे नान्नं दातुं पारयसि, द्वाभ्यां जनाभ्यां

सहैकमतिः सन् सामान्यं पथ्यं कर्म नानुष्ठातुं समर्थः, सोऽयं भो मोक्षार्थं धावितोऽसि!! हिन्दुशास्त्रेणोक्तं यद्धर्माद् मोक्षो नूनमभ्यधिकः किन्तु प्रथमतया धर्मोऽनुष्ठेयः। बौद्धास्तत्रैव विमूढाः सन्त एतावदुत्पातजातमानिन्युः। अहिंसा स्वीकृता, निर्वैरं चोन्नतं तत्त्वम्; तत्त्वं तूत्तमं किन्तु शास्त्रेणोक्तम्—गृहस्थोऽसि, तव गण्डे यदि केनाप्येका चपेटा दत्ता तर्हि यदि चपेटादशकं तं प्रति त्वया न प्रत्यावर्तितं तदा पापमेवाचरिष्यसि। तथोक्तम्—आततायिनमायान्तमित्यादि[२]। उक्तं हि मनुना यदाततायिनो ब्राह्मणस्यापि वधे नास्ति पापः। सत्यमेतत्, न विस्मर्तव्यमेतद् वाक्यम्। वीरभोग्या वसुन्धरा—वीर्यं प्रकाशय, सामदानभेददण्डरूपा नीतीः प्रकटय, महीं भुङ्क्ष्व, तदा त्वं धार्मिकोऽसि। परं सम्मार्जनीपदाघाताभ्यां प्रहृतोऽपि तूष्णीं घृणितं जीवनं यापयसि चेत्तदानीमिह काले नरकभोगः परलोकेऽपि तथा। अयं शास्त्रसिद्धान्तः। सत्यं सत्यं परमसत्यं रे वत्स! स्वधर्मोऽनुष्ठीयताम्, अन्यायो नाचरितव्यः, अत्याचारो न करणीयः, कुरु यथासाध्यं परोपकारम्। किन्तु गृहस्थस्यान्यायसहनं पापम्; तत्क्षणादेव प्रतिविधानार्थं चेष्टितव्यम्। महोत्साहेनार्थोपार्जनं कृत्वा स्त्री परिवारो दश जनाश्च प्रतिपालनीयाः, दश च हितकराणि कार्याण्यनुष्ठेयानि। एतदपि न कर्तुं पारयसि चेत्तदा कीदृशस्त्वं मानुषः? गृहस्थोऽपि नासि, प्रार्थ्यते पुनर्मोक्षः!!

पूर्वमुक्तं यद्धर्मः खलु कार्यमूलकः। कार्यशीलता हि धार्मिकलक्षणम्। किमन्यत्, केषाञ्चन मीमांसकानां मते ये वेदभागा न क्रियापरास्तेषां वेदत्वमेव नास्ति—आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्[३]। 'ओङ्कारध्यानेन सर्वार्थसिद्धिः'[४], 'हरिनाम्ना सर्वपापनाशः'[५], 'शरणागतस्य सर्वाप्तिः'[६]—सर्वाण्येतानि शास्त्रवाक्यानि साधुवाक्यानि चावश्यं सत्यानि, परन्तु दर्शनमायाति यन्मनुष्याणां लक्षाणि 'ॐ'कारं व्यर्थं जपन्ति, हरिनाम्ना चोन्मत्तानि भवन्ति, अहोरात्रं 'प्रभुर्यत् करोति'[७] इति ब्रुवन्ति किन्तु तैः किं लभ्यते—अश्वस्य डिम्बः। तस्यायमर्थो बोध्यः—तस्य खलु जपः सार्थको भवति, तस्य मुखे हरेर्नाम वज्रवदमोघम्, स च यथार्थं शरणं प्रपत्तुं शक्नोति यो हि कर्मानुष्ठानेन चित्तशुद्धिमवाप्नोति यो वा 'धार्मिकः'।

प्रत्येको जीवः शक्तिप्रकाशस्य भवत्येकैकं केन्द्रम्। प्राक्तनेन कर्मणा सा शक्तिः सञ्चिता विद्यते, तया च सह वयं जन्म लब्धवन्तः। यावन्न सा शक्तिः कार्यरूपेण प्रकाशमेति तावत् को नु स्थिरः स्थास्यति? तावत्पर्यन्तं भोगं को निरुन्ध्यात्? तत्र किं दुःखभोगात् सुखभोगो न श्रेयान्? कुकर्मणः कच्चिन्न सुकर्म श्रेयः? पूज्यपादः श्रीरामप्रसादः प्राह—'प्रशस्यं गर्हितं चेति द्वयी भाषा, तयोर्यत् प्रशस्यं तस्यैवानुष्ठानं श्रेयः।'

ननु किं प्रशस्यम् ? मुक्तिकामस्य कृते प्रशस्यमेकविधं धर्मकामस्य त्वन्यविधम्[८]। गीताप्रवक्ता श्रीभगवान् महता प्रयत्नेन समबोधयद् यदेतस्मिन् महासत्ये निहितं खलु हिन्दूनां स्वधर्मजातिधर्मादिकम्। 'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव चे'[९] त्यादिकं भगवद्वाक्यं मुमुक्षोः कृते। पुनः 'क्लैव्यं मास्म गमः पार्थे'[१०] त्यादि, 'तस्मात्त्वमुत्तिष्ठ यशो लभस्वे'[११] त्यादि च धर्मलाभस्योपायो भगवता दर्शितः। कामं कर्मानुष्ठाने कश्चन पापलेशोऽवश्यमागमिष्यति। नन्वागच्छेत्, उपवासादर्धाशिनं किं न श्रेयः ? कर्माभावाज् जडत्वाद्धि शस्यगर्ह्यमिश्रं कर्म किं न श्रेयः ? गवा न मिथ्या भाष्यते, प्राचीरेण न चोर्यते तथापि ते गौः प्राचीरं च स्तः। मानुषश्चोरयति मिथ्या भाषते, पुनः स एव मानुषो देवो भवति। सत्त्वप्राधान्यदशायां मनुष्यो निष्क्रियो भवति, परमध्यानावस्थां प्राप्नोति, रजःप्राधान्ये प्रशस्यं गर्हितं च कर्म करोति, तमःप्राधान्ये पुनर्निष्क्रियो जडो भवति[१२]। उच्यतां तदधुना यत् किमयं सत्त्वप्रधान उत तमःप्रधान इति वाह्यतः कथं वोद्धुं शक्नुयाम् ? सुखदुःखयोरतीताः क्रियाहीनाः शान्तरूपाः सत्त्वावस्था वयं स्म उत प्राणहीना जडप्रायाः शक्त्यभावात् क्रियाहीना महातामसावस्थामुपगतास्तूष्णीं शनैः शनैः पूतिमापन्नाः—उच्यतामनयोः कः खलु कल्पोऽस्माकम्। स्वेषां मन एव प्रष्टव्यम्। न तत्रोत्तरमपेक्षितम्—फलेन परिचीयते[१३]। सत्त्वप्राधान्याद् मनुष्यो निष्क्रियो भवति, शान्तो भवति किन्तु तन्निष्क्रियत्वं महाशक्तिं केन्द्रीकृत्य समायाति, सा शान्तिर्महावीर्यस्य जननी। तादृशेन महापुरुषेणास्माभिरिव हस्तपदसञ्चालनेन कर्म न कर्तव्यं भवति, तस्येच्छामात्रादनायासं कृत्स्नं कर्म सम्पद्यते। स एव पुरुषः सत्त्वगुणप्रधानो ब्राह्मणः सर्वलोकपूज्यः, किं तेन 'मां पूजय' इति वदता पल्लीषु क्रन्दता भ्रमितव्यम् ? जगदम्बा तस्य भालपट्टे स्वहस्तेन लिखति 'अयं महापुरुषः सर्वैः पूज्यता' मिति, जगच्च नतमस्तकं तच्छृणोति। स एव महापुरुषः 'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च' इत्यादि। यश्चायं पुनस्तूष्णींशीलो निर्बलो ग्रासं गिलन्नस्फुटं ब्रवीति, छिन्नवस्त्रवद् दिवससप्तकं कृतोपवास इव च क्षीणकण्ठः सप्तभिश्चपेटाभिः प्रहृतोऽपि वाक्यं न ब्रवीति—तस्य सर्वाण्येतानि तमोगुणलक्षणानि मृत्युचिह्नानि, नायं सत्त्वगुणः किन्तु पूतिगन्धः। अर्जुनोऽप्येतद्गणभुक्तो बभूवेति भगवानेतावता प्रयत्नेन गीतायां तमबोधयत् खलु? पश्य प्रथमत एव भगवतो मुखात् कीदृशं वाक्यं निर्गतम्—'क्लैव्यं मास्म गमः पार्थ', उपसंह्रियते च —'तस्मात्त्वमुत्तिष्ठ यशो लभस्वे' ति। जैनबौद्धानां प्रभावाद् वयमपि तामसिकानां गणेऽन्तर्भुक्ता जाताः—देशं व्याप्य सर्वैः कियद् वा हरिनामोच्चार्यते भगवांश्चाहूयते, भगवांस्तु सहस्रं वर्षाणि नास्मद्वाक्यं शृणोति। श्रोष्यति वा किमर्थम् ? निर्बुद्धेर्वाक्यं मानवेनापि न श्रूयते किं

पुनर्भगवता। अधुना भगवद्वाक्यश्रवणमेवोपायः—क्लैव्यं मास्म गमः पार्थ, तस्मात्त्वमुत्तिष्ठ यशो लभस्व।

पुनः प्रस्तूयते प्राच्यपाश्चात्त्ययोर्वार्ता। आदौ तावद् दृश्यतामयं परिहासः। इउरोपीयानां देवो यीशुरुपदिदेश—निर्वैरो भव, एकस्मिन् गण्डे चपेटाहतश्चेदपरं प्रसारय, कर्मणो विरतो भव, कृत्स्नमुपकरणं सामग्रीं च पिण्डाकारेण वद्ध्वासीनो भव, अयमहं पुनरागमिष्यामि, द्वित्रैर्दिनैर्जगदिदं नाशमेष्यति। अस्माकं तु देवो ब्रवीति—महोत्साहेन सदा कार्यं साधय, शत्रून् नाशय, महीं भुङ्क्ष्व। किन्तु विपरीतमापतितम्[१४]। ते इउरोपीया यीशोर्वाक्यं न तृणाय मेनिरे। सदैव महारजोयुक्ता महाकार्यशीला महोत्साहेन देशाद्देशान्तरं भोगसुखमाकृष्य भुञ्जते ते। वयं पुनर्गृहकोणमध्यासीनाः सामग्र्युपकरणादिकं पिण्डीकृत्य निवध्य चाहोरात्रं मरणचिन्तानिमग्नाः 'नलिनीदलगतजलमतितरलं तद्वज्जीवनमतिशयचपल'-[१५]मिति गानं कुर्मः, यमभयाच्च हस्तपादं कुक्षौ प्रविशतीव। दग्धो यमोऽपि ततोऽस्मान् स्ववशमानयति, जगतो यावान् रोगोऽस्मद्देशं प्रविष्टः। गीताया उपदेशं कः शुश्राव?—इउरोपीयः। यीशोरिच्छामनुवर्तन्ते के?—कृष्णस्य वंश्याः। तत्त्वमेतदधिगन्तव्यम्। मोक्षमार्गस्तु प्रथमतो वेदेनैवोपदिष्टः। ततो बुद्धो वा यीशुर्वा सर्वे तस्मादेव यत् किमपि जगृहुः। ननु ते खलु सन्यासिन आसन्—'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च' इति सम्यग्, तत्त्वं चोत्तमम्। परन्तु बलादेव समग्रं जगद् मोक्षमार्गं नेतुं कथं प्रयत्नः? घृष्ट्वा मार्जित्वा च रूपम्, धृत्वा वद्ध्वा च प्रेम किं सम्भवति? यः खलु मानवो मोक्षं नाभिलषति मोक्षयोग्यश्च न, तदर्थं बुद्धो वा यीशुर्वा किमुपदिदेशेति कथ्यताम्—न किमपि। 'उत वा त्वं मोक्षं लप्स्यसे, नोचेदुत्सन्नो भविष्यसि' इति द्वौ कल्पौ। मोक्ष वर्जयित्वाऽन्यार्थं प्रयततेति सोऽपि मार्गो निरुद्धः। जगदिदं त्वया भोक्ष्यत इति नास्ति तादृशो मार्गः, अपि चास्ति प्रतिपदं विघ्नः। केवलं वैदिके धर्मे चतुर्वर्गस्यैतस्य साधनस्य पन्था विद्यते—धर्मोऽर्थो कामो मोक्षश्च। बुद्धेनास्माकं सर्वनाशः संसाधितः। यीशुना च ग्रीसरोमयोः सर्वनाशः सम्पादितः!!! ततो भाग्यादेव इउरोपीयाः 'प्रटेस्टाण्ट' भूत्वा यीशोर्धर्मं प्रमृज्य चिक्षिपुः, श्वासं सन्त्यज्य जीविताः। भारतवर्षे कुमारिलः[१६] पुनः कर्ममार्गं समचालयत्, शङ्करो रामानुजश्च चतुर्वर्गसमन्वयात्मकं वैदिकं मतं पुनः प्रवर्तते स्म, देशस्य जीवनाय कश्चनोपाय आगतः। परं भारतवर्षे जनानां त्रिंशत् कोटय इति विलम्बो जायते। जनानां त्रिंशत् कोटयः किमेकस्मिन् दिवसे जागरयितुं शक्यन्ते?

बौद्धधर्मस्य वैदिकधर्मस्य चैकमुद्देश्यम्। परं बौद्धमतस्योपायो न सङ्गतः। उपायश्चेत् सङ्गतः स्यात्तदास्माकमयं सर्वनाशः कथमापन्नः? 'काले भवति'

इत्युक्तिः किं सङ्गच्छते ? कालः किं कार्यकारणसम्वन्धमतीत्य कार्यं साधयेत् ?

## स्वधर्मो जातिधर्मो वा[१७]

अत उद्देश्यैकत्वेऽपि वौद्धा उपायहीनतया भारतवर्षं पातितवन्तः। वौद्ध-वन्धवः क्रुद्धा भवेयुः, भवन्तु नाम, स्वगृहान्नमधिकतया भक्षयिष्यन्ति। परं सत्यं वक्तव्यम्। उपायस्तु वैदिक एव, वैदिकधर्मान्तर्गतो जातिधर्मः स्वधर्मो वा वैदिकसमाजस्य भित्तिस्वरूपः। वहवः पुनर्मे वन्धवो मया कोपिताः, केचित्तु वन्धवो व्रुवन्ति यदेतस्य देशस्य जनाश्चाटुवचनैः स्तूयन्ते। तत्रैकं वचनं मया तेषां पुरतः समुपस्थापनीयं यदेतद्देशीयानां संस्तववचनाद् ममास्ति को लाभः ? अन्नाभावाद् मृतोऽपि चेद् मद्देशीया एकां मुष्टिमपि भिक्षारूपेण न प्रयच्छन्ति, भिक्षादिना देशान्तरेभ्यो यदि किञ्चिदन्नमानीय दुर्भिक्षग्रस्ता अनाथा मया भोज्यन्ते तर्हि तस्य भागं ग्रहीतुं देशीयानां महान् प्रयत्नः परिदृश्यते, यदि स भागो न लभ्यते तदास्ति परुषोक्तेः प्राचुर्यम् !! अहो स्वदेशीयाः पण्डितगणाः, एवंविधा ह्यस्माकं स्वदेशस्य लोकाः, तेषां कथं संस्तवनम् ? उन्मादास्ते जाताः, उन्मादं यदि कोऽप्यौषधं पाययेत्तदा तस्य हस्ते कतिचिद् दंशनानि नूनमुन्मादेन संपात्यन्ते। तानि सोढ्वापि य औषधं पाययेत् स एव यथार्थो वन्धुः। अयमेव जातिधर्मः स्वधर्मश्च सर्वस्मिन् देशे समाजकल्याणस्योपायः, मुक्तेश्च सोपानम्। तस्य जातिधर्मस्य स्वधर्मस्य च नाशेन साकमस्य देशस्याधःपतनं जातम्। परन्तु निधुरामेण सिधुरामेण वा येन केनचिद् यज् जातिधर्मत्वेन स्वधर्मत्वेन वाऽवगतं स खलु विपरीतापात एव। न हि निधुर्जातिधर्मस्य लेशमप्यवगच्छति, तस्य ग्राम्यमाचारमेव सनातनत्वेन विजानाति, सदा स्वानुकूल्यमभिलषति, एतस्य फलस्वरूपेण च स विनाशमुपैति।

नाहं गुणगतजातिमुल्लिखामि, अत्रायमुल्लेखो वंशगतजातेर्जन्मगतजातेर्वा। कामं गुणगतजातिरेवादिभूता परन्तु गुणो हि कतिभ्यो वर्षेभ्योऽनन्तरं वंशगतत्वेन परिणमते। तस्मिन् मूल एवायमाघातः, अन्यथा कथं सर्वनाशः समायातः ? 'सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः'[१८]। कथं नामास्य घोरस्य वर्ण-साङ्कर्यस्य समुपस्थानम्, कथं वा श्वेतवर्णस्य कृष्णत्वमुपगतम्, रजःप्रधानस्य सत्त्व-गुणस्य तमोगुणत्वेन[१९] कथं नाम विपरिवर्तनं जातमिति वहुलं तद् वचः, वक्तव्यं च तत् पश्चात् कदाचन। अधुनैतदेवावगन्तव्यं यज् जातिधर्मस्य सम्यगवस्थितौ सत्यां देशस्याधःपतनं न कथमपि सम्भवेत्। यदि सत्यमेतत्तदा कथमस्माकमधः-

पतनं संघटितम्? नूनं जातिधर्म एव विनाशं प्राप्तः। अतो यद् भवद्भिर्जातिधर्मत्वेनोल्लिख्यते तत् सर्वथा विपरीतम्। प्रथमतया तावत् प्राचीनं ग्रन्थजातं सम्यगालोच्यतां, द्रक्ष्यसि च समनन्तरं यत् सर्वत्रैव शास्त्रोक्तस्य जातिधर्मस्य प्रायो विलोपः सञ्जातः। तत् कथमस्य पुनरागमनं स्यादिति प्रयत्नः करणीयः, तेनैव च परमं कल्याणं निश्चितं भवति। यन्मया शिक्षितं यच्चावगतं तदेव युष्मभ्यं प्रोक्तम्। नाहं विदेशाद् युष्माकं हितार्थं नूतनतया सम्प्राप्तो यद् युष्माकं मूर्खत्वस्यापि मया वैज्ञानिकं व्याख्यानं प्रदेयं स्यात्। विदशिनो मित्रस्य किं वा स्यात्? केवलं स्तुतिरेव तस्याभीष्टम्। युष्माकं मुखे कलङ्कश्चेल्लिप्येत तदानीं स ममैव मुखे पतति, किं वा तस्य?

पूर्वमेवोक्तं यदेकैकस्या जातेरेकैकं जातीयमुद्देश्यं विद्यते। प्राकृतिकं नियममनुसृत्य महापुरुषाणां प्रतिभावलाद् वा प्रत्येकस्या जातेः सामाजिकी रीतिर्नीतिश्च तस्योद्देश्यस्य सफलीकरणाय तदानुकूल्येन संघटन्त्यास्ते। प्रत्येकस्या जातेर्जीवने तदुद्देश्यं तदुपयोग्युपायभूतमाचारं च विहाय विद्यमाना सर्वा रीतिर्नीतिश्च वाहुल्यमात्रम्। वाहुल्यमात्रस्यैतस्य रीतिनीतिजातस्य ह्रासवृद्धिभ्यां न काचन क्षतिः। किन्तु यदि तस्मिन् मुख्योद्देश्ये पतति कश्चनाघातस्तर्हि तत्क्षणादेव तस्या जातेर्नाशो भविष्यति।

वाल्ये श्रुतं नन्वाख्यानं यद् राक्षस्याः प्राणाः कस्मिंश्चिद् विहगे निहिता आसन्। तस्य विहगस्यानाशे न कथमपि राक्षस्या नाशो भवति, एतदपि तथा। द्रक्ष्यसि पुनर्यद् ये खल्वधिकारा जातीयजीवनार्थमेकान्ततो नावश्यकास्तेषामपगमेऽपि नासौ जातिः सातिशयं विरुणद्धि, किन्तु यदा यथार्थे जातीये जीवने पतत्याघातस्तदा क्षणादेव महता वलेन प्रतिहन्ति।

तिसृणां वर्तमानकालीनानां जातीनां तुलना कार्या यासामितिहासो युष्माभिरनल्पं ज्ञायते—फरासी इंरेजो हिन्दुश्च। राजनीतिकी स्वतन्त्रता फरासीजातेश्चरित्रस्य कशेरुः। प्रजाः खलु सर्वविधमत्याचारं निर्वाधं सहन्ते, करभारेण पिष्टाः सन्तु, न विवदन्ते। कृत्स्नो देशो वलादेवाकृष्य योद्धृत्वेन नियोज्यताम्, नास्ति विरोधः। किन्तु यदैव सा स्वतन्त्रता केनापि व्याहता तदैव समग्रा जातिरुन्मादवत् प्रतिहनिष्यति। न कोऽपि कस्यचनोपरि वलेनोपविश्य तमादिशेदिति फरासीचरित्रस्य मूलमन्त्रः। 'ज्ञानी, मूर्खः, धनी, दरिद्रः, अभिजातः, अन्त्यजो वा भवेयं राज्यशासने समाजस्वातन्त्र्ये चास्माकं समानोऽधिकारः'—एतस्योपरि चेत् कोऽपि हस्तं न्यस्येत्तर्हि तेन दुर्भोगो भोग्यः।

इंरेजचरित्रे वाणिज्यबुद्धिरादानं प्रदानं च प्रधानम्। यथाभागं न्यायतो विभाग इति हि इंरेजस्य मूलं वक्तव्यम्। इंरेजो मस्तकं नमयित्वा राजानं

कुलीनजातेरधिकारं च स्वीकरोति, केवलं यदि स्वकीयात् कोषाद् धनस्य निष्कासनमपेक्षितं तर्हि तस्य विगणनं प्रक्ष्यति । राजा विद्यते, सम्यगेव तत्—मान्यं कुर्मः किन्तु यदि धनं वाञ्छसि तर्हि कार्यकारणं गणनां चाश्रित्य वयं कतिचिद् वाक्यानि ब्रूमः, अवगच्छामः, पश्चादेव च प्रयच्छामः। प्रसह्य धनमाददानो राजा महान्तं विप्लवमानिनाय, ते राजानं[२०] जघ्नुः।

हिन्दुर्ब्रूते यद् राजनीतिकी सामाजिकी च स्वतन्त्रता सम्यगेव, परं यद् मूलं तत्त्वं तद्धि पारमार्थिकी स्वतन्त्रता—मुक्तिः। एतदेव जातीयजीवनस्योद्देश्यम्। वैदिको भवतु, जैनो वा, बौद्धो वा, अद्वैतवादी, विशिष्टाद्वैतवादी, द्वैतवादी वा यः कोऽपि भवतु, सर्वेषां तत्रैकमत्यम्। तत्र हस्तं न प्रयच्छ, तथा सति सर्वनाशः, तद् वर्जयित्वा यत् किमपि क्रियताम्, तूष्णीमुपविशामः। पदाघातं कुरु, 'कृष्ण' इति ब्रूहि, सर्वस्वमाच्छिद्य गृहाण—न कश्चन विशेषः किन्तु तद् द्वारमुन्मुक्तं स्थाप्यताम्। दृश्यतां तावद्—वर्तमाने काले पाठानवंशीया आगच्छन्तो गच्छन्तश्चासन्, न कोऽपि स्थिरः सन् राज्यं शासितुमशक्नोत्। कथं तत्? हिन्दूनां धर्मेऽविरतमाघातं ते कुर्वन्त आसन्। प्रत्युत मोगलराज्यं कीदृशं सुदृढं प्रतिष्ठितं महाबलं च जातम्। कथं नाम तत्?—मोगलास्तत्र नाजघ्नुः। हिन्दव एव मोगलसिंहासनस्य भित्तिस्वरूपाः, जाहाङ्गीर-शाजाहान-दाराशिकोनामकानां सर्वेषां जननी खलु हिन्दुरेव[२१]। पुनरालोक्यतां यद् यदैव दग्ध आरङ्गजेवः पुनस्तत्राघातं प्रादात् सद्य एव तादृशं महद् मोगलराज्यं स्वप्नवद् विलीनम्[२२]। यदेतद् इंरेजस्य सुदृढमासनं तत् कस्योपरि प्रतिष्ठितम्? धर्मो न कदापि तैर्विघ्नित इति कृत्वा। धर्मयाजकपुङ्गवा लेशतस्तथा चेष्टिताः सन्त एव '५७ खृष्टाब्दीय विप्लवं समुपस्थापयामासुः[२३]। यावदेव हि इंरेजैरेतत् सम्यगवगतं भविष्यति पालयिष्यन्ति च ते तथा तावत् तेषां सिंहासनं राजधानी चाचलं स्थास्यति। विज्ञैर्बहुदर्शिभिः इंरेजैरेतत्तत्त्वमवगम्यते, पठ्यतां च लर्ड-रवार्ट्स्-विरचितं "भारतवर्षे एकचत्वारिंशद् वर्षाणि" इति पुस्तकम्[२४]।

अवगम्यते नूनमधुना यदेतस्या राक्षस्याः प्राणविहङ्गमः कुत्र तिष्ठतीति—धर्मे। तस्य नाशं न कोऽपि कर्तुमशक्नोदिति हेतोरियं जातिरेतावत् सोढ्वाऽधुनापि जीविता। भवतु, कश्चन स्वदेशीयः पण्डितो वदति यत्तत्र प्राणस्थापनस्येदृशी काऽवश्यकता। यथाऽन्येषु देशेषु दृश्यते तथाऽत्रापि सामाजिके राजनीतिके वा स्वातन्त्र्ये स्थाप्यतां नाम। वक्तुं सुकरमेतत्, यदि तर्कच्छलेनापि स्वीक्रियेत यद् धर्माचरणादिकं सर्वं मिथ्या तदानीमपि कीदृशः परिणाम इत्यालोकनीयम्। अग्निरेकोऽपि तस्य प्रकाशो हि विविधः[२५]। एका हि सा महाशक्तिः फरासीदेशीये राजनीतिकस्वातन्त्र्याकारेण, इंरेजे वाणिज्यसुविचारविस्ताररूपेण तथा

हिन्दुजनस्य प्राणेषु मोक्षेच्छास्वरूपेण विकसिता। परमस्या महाशक्तेः प्रेरणया कति शतकानि नानाविधसुखदुःखानां मध्यतः फरासीनाम् इंरेजानां वा चरित्रं निर्मितं जातम्, तस्या एव च प्रेरणया लक्षपरिमितानां शतकानामावर्तनेन हिन्दोर्जातीयचरित्रस्य विकासोऽभूत्। पृच्छामि, वर्षाणां लक्षाणि व्याप्य विद्यमानस्यास्मदीयस्वभावस्य परित्यागः सरल उत तव विदेशीयस्य वर्षाणां द्वे शते अथवा पञ्च शतानि यावत् प्रचलितस्य स्वभावस्य हानं सरलम्? ननु इंरेजेन धर्मप्राणेन कथं न भवितव्यम्, प्रहरणकर्तनादिकं विस्मृत्य शान्तेन शिष्टेन तेन कथं न स्थीयते?

सारमेतद्—या खलु तटिनी पर्वतात् सहस्रं क्रोशानधोऽवतीर्णा किं नाम सा पर्वतं प्रतिगच्छति, प्रतिगन्तुं शक्नुयाद् वा? एकान्ततश्चेद् गन्तुं यतते तर्हीतस्ततो वितता सती सा नाशमेष्यतीत्येतावन्मात्रम्। सा नदी यथा तथा समुद्रं यास्यत्येव, दिवसद्वयेन पूर्वं वा पश्चाद् वा, कतीनां मेध्यस्थानानां मध्यत उत सकृद् द्विर्वाऽमेध्यस्थानं विभिद्य। यदि वर्षाणां दश सहस्राणि जातीयजीवनमेतद् भ्रान्तं स्यात्तदा नास्ति कोऽप्युपायोऽधुना, अद्य नूतनं किञ्चन चरित्रं निर्मातव्यं चेत्तदा मरिष्यतीत्येव।

किन्तु बुद्धिरियमामूलचूडं भ्रान्ता। क्षम्योऽहं, वचनमेतदल्पदर्शिनाम्। देशाद्देशान्तरं गच्छ, बहूनां देशानामवस्था सम्यगीक्ष्यताम्, स्वीयेन चक्षुषा पश्य न त्वन्यदीयेन, तदनन्तरं यदि मस्तिष्कमवशिष्येत तर्हि तदतिरिच्य स्वेषां प्राचीनग्रन्थजातमधीष्व, भारतवर्षस्य प्रदेशात् प्रदेशान्तरं निपुणमालोकय, बुद्धिमतः पण्डितस्य दृशा निर्वर्णय न तु गण्डमूर्खस्य दृशा, सर्वं द्रष्टुं शक्ष्यसि यदेषा जातिर्यथार्थतो जीविता विद्यते, प्राणाः क्षीणस्वरूपेण क्रियाशीला विद्यन्ते, उपरि भस्मावृतास्तिष्ठन्तीत्येतावदेव। समीक्षस्व च यदेतस्य देशस्य प्राणा धर्मः, भाषा धर्मः, भावो धर्मः। यच्च ते राजनीतिः, समाजनीतिः, रथ्यासम्मार्जनं, महामारीनिवारणं, दुर्भिक्षग्रस्तायान्नदानम्—एतत् सर्वमेतस्मिन् देशे यथा चिरेण जातं तथैव भविष्यति, अर्थाद् धर्मद्वारा भवति चेत्तदा भविष्यति। अन्यथाऽऽकाशकुसुमवत्, तव रोदनकोलाहल एव पर्यवसानम्, हा रामचन्द्र!

एतदतीत्य यः खलूपायः स तु सर्वस्मिन् देशे सम एव। अयमर्थः—कतिचन शक्तिमन्तः पुरुषा यत् कुर्वन्ति तदेव भवति। अन्ये खलु गड्डरिकाप्रवाह[२१] एव, न तदतिरिच्यन्ते। तव पार्लमेण्ट् दृष्टम्, सेनेट् दृष्टम्, दृष्टं च निर्वाचनं व्यालट्-पत्रं संख्यागुरुत्वादिकं सर्वम्, हा रामचन्द्र! सर्वेष्वेव देशेष्वेकैव सा वार्ता। शक्तिमन्तः पुरुषा यथेच्छं समाजं नयन्ति, शिष्टाश्च सर्वे मेषगणाः। तद् भारतवर्षे को नाम शक्तिमान् पुरुषः—यो हि धर्मवीरः। तेऽस्माकं समाजं परिचालयन्ति।

समाजस्य रीतिर्नीतिर्वा यदि परिवर्तनमर्हेत्तदा त एव परिवर्तयन्ति। तद् वयं शृणुमः कुर्मश्च। तदत्र तव बाहुल्यस्वरूपः संख्यागुरुत्वनिर्वाचनादिको व्यर्थः कोलाहलो नास्तीत्येव।

सत्यम्, निर्वाचन-व्यालट्पत्रादिभिः सह प्रजानां येयं शिक्षा सम्पद्यते साऽस्माकं न जायते किन्तु राजनीतिं द्वारीकृत्य यच्चोरवृन्दं देशस्य लोकानां शोणितं धात्वा कृत्स्नेषु इउरोपीयदेशेषु जीवदास्ते पुष्टमोजस्वि च भवति तद् वृन्दमस्माकं देशे नास्ति। तदुत्कोचवाहुल्यं, सा दिनदस्युता यत् पाश्चात्त्ये प्रचलति! अहो रामचन्द्र! यद्याभ्यन्तरं तत्त्वं प्रत्यक्षीकुर्यास्तदा मनुष्येष्वाशां परित्यजेः।

गोरस गलि गलि फिरे सुरा बैठि बिकाय।
सती को न मिले धोती कस्बिन् पहने खासा॥[२७]

येषां हस्ते धनं तेषां मुष्टिगतं खलु राज्यशासनम्, प्रजास्ते लुण्ठन्ति शोषयन्ति च, तदनन्तरं योद्धृस्वरूपेण जनांस्तान् विविधेषु देशेषु मरणार्थं प्रेषयन्ति, सति जये पूरयित्वा तेषां गृहं धनं धान्यं चागमिष्यति, प्रजास्तु तत्रैव मृताः। हा राम! न हि विस्मितो भव, न वा कापटचेन विस्मृतो भव।

एकं तावत्तत्त्वमवगन्तव्यम्। मनुष्यो व्यवहारं रचयति, अथवा व्यवहारो मनुष्यं निर्माति? मनुष्योऽर्थमुपार्जयति, उतार्थो मनुष्यं जनयति? मनुष्यो नाम यशश्च साधयति, आहोस्विद् नाम यशश्च मनुष्यं निष्पादयति?

मनुष्यो भव, रामचन्द्र! द्रक्ष्यसि यच्छिष्टं सर्वं स्वत एव लीलयाऽगमिष्यति। कुक्कुरवन्मिथः संघर्षं तं परित्यज्य सदुद्देश्यं सदुपायं सत्साहसं सद्वीर्यं चावलम्बस्व। जातश्चेत्तर्हि कञ्चनाङ्कं पातयित्वा गच्छ।

तुलसी जब जग में आयो जग हसे तुम रोय।
ऐसी करनी कर चलो कि तुम हसे जग रोय॥[२८]

—हे तुलसीदास, यदा तव जन्माभूत्तदा सर्वे हसन्त आसन्, त्वं तु रोदनपरोऽभूः। अधुना त्वमीदृशं कर्म कुर्वन्नास्स्व यत्त्वं हसन् मरिष्यसि, जगच्च त्वदर्थं रोदिष्यति। शक्नोषि चेदेतत् कर्तुं तदानीं त्वं मनुष्योऽसि, अन्यथा कीदृशस्त्वम्?

अपरं च तत्त्वमवगन्तव्यं त्वया, मेऽग्रज, नूनमस्माभिरितराभ्यो जातिभ्यः प्रभूतं शिक्षणीयमस्ति। योऽयं मनुष्यो ब्रवीति, न मम शिक्षणीयं किञ्चिद् विद्यते, स म्रियमाण एव। या च जातिर्वदति, वयं कृत्स्नं जानीमः, तस्या जातेरवनतिदिवसो नितान्तं समीपमागतः। 'यावज्जीवनं तावत् पठनम्'। विचार्यतां तावद् यत्तद् द्रव्यमस्मदीयेन स्वरूपेण रूपयितव्यमित्येव। अपि च, मूलं सदा जीवितं संस्थाप्य तदन्यदेव शिक्षणीयम्। ननु भोजनं हि सर्वेषु देशेषु समानमेव। वयं पादौ संहृत्योपविश्य च भक्षयामः, इउरोपीयास्तु पादावालम्ब्यो-

पविश्य खादन्ति। चिन्त्यतामधुना यदहमेतेषां पद्धत्या प्रणीतं खाद्यमद्मि, किं ततो मया तद्वल्लम्बमानपादेन भक्षयितव्यम्? मम पादौ यमसदनं गच्छत इव––शूलवेदनया प्राणान्तो भवति, तस्य किम्? अतः पादौ संहृत्य, भोजनं त्वेतेषामवश्यं भक्षयिष्यामि। एवमेव विदेशीयं यत् किमपि शिक्षणीयं तन्मदीयत्वेन––पादसंहननवत् स्वकीयत्वेन, मूलं जातीयचरित्रमव्याहतं संस्थाप्य। अरे, किं वस्त्रेण मानुषो भवति, अथवा मानुषो वस्त्रं परिदधाति? शक्तिमान् पुरुषो यत् किमपि वस्त्रं परिदध्यात्, जनैर्मान्य एव भवति। मादृशः पुनर्मूर्खो रजकपिण्डं स्कन्धे कृत्वा भ्रमन्नपि न लोकैर्बहुमतो भवति।

## शरीरं जातितत्त्वं च

उपोद्घातोऽयं नितान्तं महदाकारः सञ्जातः। एतस्याः पातनिकाया अनन्तरं देशद्वयस्य तुलना सरला भविष्यति। एतेऽपि सन्तो वयमपि। 'कं वा निन्दामि, कं वाऽभिवादयामि, पक्षद्वयमेव भारवत्'[२९]। तत् साधुत्वे विशेषोऽस्ति, एतदेव।

मनुष्यस्यान्तः पदार्थत्रयं विद्यत इत्यस्माकमभिमतम्। शरीरमस्ति, मनो विद्यते, आत्मा च वरीवर्ति। आदौ शरीरमेवालोच्यतां यत् सर्वतो बहिर्विद्यमानम्।

प्रतिशरीरं कियान् भेद इति तावत् प्रथमतया दृश्यताम्। नासिका, मुखमाकृतिः, दैर्घ्यं, विस्तारः, वर्णः, केशः––कतिविधं हि पार्थक्यम्।

आधुनिकपण्डितानां मते वर्णे भेदो वर्णसाङ्कर्यादुद्भवति। देशस्योष्णत्वशीतत्वभेदात् किञ्चित् परिवर्तनं भवति नूनं किन्तु कृष्णश्वेतयोर्मूलं कारणं पैतृकम्। अत्यन्तं शीतले देशेऽपि श्यामवर्णा जातिर्दृश्यते, अत्युष्णेऽपि देशे सुधाधवला जातिर्वसति। कानाडा-वास्तव्य आमेरिकाया आदिमो मनुष्यः सुमेरुसन्निहितदेशवास्तव्याश्च एस्किमो-प्रभृतयो नितरां कृष्णाः, पुनर्महाविषुवरेखोपरि विद्यमाने द्वीपेऽपि शुभ्रवर्णाया जातेर्वासः, वोर्णिओ सेलिविस् इत्यादिकं द्वीपपुञ्जं ह्यस्य निदर्शनम्।

अस्माकं शास्त्रकाराणां मते हिन्दूनां वर्गत्रितयं ब्राह्मणक्षत्रियवैश्यास्तथा भारताद् बहिःस्थिताश्चीन-हून-दरद्-पह्लव-यवन-खशनामानो जातय एवार्याभिधेयाः[३०]। शास्त्रोक्ता चीनजातिर्न वर्तमानकालीनः 'चीनेम्यान्' इति। न हि ते तेषु दिवसेषु स्वान् 'चीनें' इत्यभिहितवन्तः। 'चीन' इत्येका विशाला जातिः काश्मीरादुत्तरपूर्वतो विद्यमानासीत्। भारतम् आफगानिस्थानं चान्तरा यत्राधुना पर्वतीया जातयः सन्ति तत्र 'दरद्'-जातीया आसन्। प्राचीनचीनजातेः कतिचिद् वंशधरा विद्यन्ते किलास्मिन्नपि काले। एतर्ह्यपि विद्यते दरदिस्थानम्।

'राजतरङ्गिणी' इति काश्मीरस्येतिहासे पुनः पुनर्दरद्-राजस्य प्रभुत्वं ज्ञायते[११]। हूनाभिधेया प्राचीना जातिश्चिरं भारतवर्षादुत्तरपश्चिमतः प्रशासत्यासीत्। अधुना तिब्बतीया आत्मनो हूनानाहुः किन्तु ते 'हिउन्' इति मन्यामहे। फलं च—मनूक्तो हूनो[१२] नाधुनिकस्तिब्बतीयः। तदेवं स्याद् यदार्यो हूनस्तथा 'आशिया'-मध्यभागादागता काचन मोगलाइ-जातिश्च सम्भूय वर्तमानतिब्बतीयः समुत्पन्नः। प्रजावल्स्कि[१३] इति डयुक्-ड-अरलिआँ[१४] इति च रुश-फरासी-देशीययोः पर्यटकयोर्मतेन तिब्बतस्य वहुषु स्थानेष्वद्यापि दृश्यते जातिर्या खल्वा-र्योचितमुखनयनसम्पन्ना।

यवनेति ग्रीकानां नाम। आश्रित्य चैतन्नाम भूयान् विवादः सञ्जातपूर्वः। बहूनां मते यवनेति नाम 'योनिया'-नामकस्थानवासिषु ग्रीकेषु प्रथमतो व्यवहृतम्, अतो महाराजस्याशोकस्य पालिलेखे 'योन'[१५] इति ग्रीकजातिरभिहिता। ततो 'योन' इत्यस्मात् संस्कृतयवनशब्दस्योत्पत्तिः। एतद्देशीयानामेकेषां प्रत्नतत्त्व-विदां मतेन यवनशब्दो न ग्रीकवाची। किन्तु सर्वमेवैतद् भ्रान्तम्। 'यवन'-शब्द एवादिभूतः शब्दो यतो न केवलं हिन्दव एव ग्रीकान् यवनेत्याहुरपि तु प्राचीना मिसरीया वाविलाश्च ग्रीकान् यवननाम्नाऽभिहितवन्तः। 'पह्लव' इति पेह्लवि-भाषया कथयन्ती प्राचीना पारसी जातिः। 'खश' इत्यनेनाधुनाप्यर्धसभ्या पार्वत्य-देशं निवसन्ती काचनार्यजातिर्बोध्यते। एतस्मिन्नपि काले तन्नाम तदर्थे व्यवह्रियते। एतस्मिन्नर्थे वर्तमानकालीना इउरोपीया अपि खशां वंशधराः। अयमर्थः— याश्च सर्वाः प्राचीनार्यजातयोऽसभ्या आसंस्ताः सर्वा एव खशः।

इदानीन्तनानां पण्डितानां मते रक्ताभः शुभ्रो वर्णः खल्वार्याणाम्, तथा कृष्णो लोहितो वा केशः, ऋजुर्नासिका चक्षुश्च। मस्तकस्याकृतिः केशवर्णभेदाद् भिद्यते। यत्र च वर्णः कृष्णस्तत्रेतराभिः कृष्णवर्णजातिभिः सह मेलनेन जात-मेतत्। एतेषां मते हिमवतः पश्चिमप्रान्तस्थिताः काश्चन जातयोऽधुनाप्यविकृता आर्या विद्यन्ते, शिष्टाः सर्वाः सङ्करजातयः, अन्यथा कथं कृष्णा जाताः। परन्तु इउरोपीयपण्डितैरधुनापि विचारणीयं यद् दक्षिणभारतेऽपि वहवः शिशवो लोहित-केशा जायन्ते, कतिभ्यो वर्षेभ्योऽनन्तरं तु स केशः कृष्णो भवति, हिमालये च वहवो लोहितकेशा नीलनयनाः कपिलनयना वा दृश्यन्ते।

इदानीं पण्डितैर्मिथो मरणान्तः संग्रामः क्रियताम्! आर्येति नाम हिन्दुभिरेव चिरं स्वेषु व्यवहृतम्। शुद्धा वा सन्तु मिश्रा वा, हिन्दव एवार्यनामान इत्यलम्। ते कृष्णा इति घृणास्ति चेद् इउरोपीयैरन्यन्नाम गृह्यताम्। किं तेनास्माकम्?

किन्तु कृष्णो भवतु शुक्लो वा, जगतः सर्वासां जातीनामेतस्या हिन्दुजातेरेव सुश्रीकत्वं सौन्दर्यं च। ममेयं जातिरिति गर्ववशाद् मयैतदुक्तमिति न, किन्तु

जगति प्रसिद्धं ह्येतत्। प्रतिशतं यावन्तः सुश्रीका नरा नार्यश्चात्र देशे विद्यन्ते तत् कुत्र लभ्यम्? एतदतीत्य विचार्यतां यदितरेषु देशेषु सुश्रीत्वार्थं यदपेक्षित-मस्मदीये देशे ततोऽपि भूयोऽपेक्षणीयं विद्यते। तत्रायं हेतुर्यदस्माकं शरीरस्य भूयानेव भागोऽनावृतो विद्यते। अन्येषु देशेषु वस्त्रैरावृत्यापश्रीकस्य भागस्य क्रमेण सुश्रीकत्वसम्पादनार्थं प्रयत्नः क्रियते।

परन्तु स्वास्थ्यमधिकृत्य पाश्चात्त्या अस्मदपेक्षयाऽधिकतया सुखिनः। एषु सर्वेषु देशेषु चत्वारिंशद्वर्षः पुरुषो युवेत्युच्यते—वाल इत्युच्यते, पञ्चाशद्वर्षीया नारी च युवतिः। काममेते शोभनमदन्ति, शोभनं परिदधति, शोभनो देशः, अतीत्य च सर्वं सारमेतद् यत् स्वल्पे वयसि नोद्वाहं कुर्वन्ति। अस्माकमपि देशे याश्च काश्चन वलीयस्यो जातयो विद्यन्ते ताः पृष्ट्वा जानीहि कस्मिन् वयसि ते विवाहं कुर्वन्ति। गोरखा पाञ्जावी जाठ आफ्रिदि इत्यादयः पर्वतीयाः पृच्छय-न्ताम्। ततः शास्त्रमधीत्य ज्ञायतां यद् ब्राह्मणक्षत्रियवैश्यानां विवाहवयः खलु क्रमेण त्रिंशत् पञ्चविंशतिर्विंशतिश्च वर्षाणि[१]। आयुषि वले वीर्ये चैतेषाम-स्माकं च सुमहान् भेदः। अस्माकं हि 'वलं बुद्धिरुत्साहस्तृतीयदशकादनन्तरं समाप्तम्', एते तु तदा सद्यः शरीरमार्जनं कृत्वोत्तिष्ठन्ति।

वयं निरामिषाशिनः, अस्माकं रोगाणामधिको भाग उदरमाश्रित्य, उदर-भङ्गाद्धि वृद्धो वृद्धा च म्रियते। एते मांसाशिनः, एतेषां रोगाणामधिको भागो हृदयमधिकृत्य। एषां वृद्धो वृद्धा च हृद्रोगात् क्लोमरोगाद् वा म्रियते। एत-द्देशीयः कश्चन विज्ञो भिषग्वन्धुः पृच्छति—उदररोगिणः किं प्रायो निरुत्साहाः वैराग्यवन्तश्च भवन्ति? हृदयादौ पूर्वकाये चेद् रोगस्तर्हि पूर्णतया विद्यते ह्याशा विश्वासश्च। विसूचिकारोगिणः प्रथमत एव मृत्युभयादस्थिरा दृश्यन्ते। यक्ष्मरोगी मृत्युपर्यन्तं विश्वसिति यदसौ निरामयो भविष्यति। किमत एव भारतस्य जनाः सदैव 'मरणं मरणं', 'वैराग्यं वैराग्यं' चेति ब्रुवन्ति? नाह-मधुनापि तस्योत्तरं दातुं समर्थः किन्तु विषयोऽयं विचारमर्हति।

अस्मद्देशे दन्तरोगः केशरोगश्च नितान्तं स्वल्प एव। एषु देशेषु स्वल्पाना-मेव लोकानां स्वीयः स्वाभाविको दन्तः, वाहुल्यं च खलतीनाम्। वयं नासिकां कर्णं चाविध्यामोऽलङ्कारपरिधानार्थम्। न ह्येतेषां शिष्टा इदानीं प्रायो नासिकां कर्णं वाऽविध्यन्ति। किन्तु कटिवन्धनेन कशेरुं वक्रीकृत्य प्लीहां यकृतं च स्वस्था-नाद् भ्रंशित्वा शरीरं हतश्रीकं कुर्वन्ति। आकृतिराकृतिरिति तेषां मरणम्, ततश्च गुच्छीकृतस्य वस्त्रस्योपरि खल्वाकृतिः स्थापनीया।

## वेषो भूषा च

एतेषां वेषः कर्मसाधनार्थमत्यन्तमुपयोगी। वित्तशालिनां या ललनास्तासां सामाजिकवेषं विहाय (सामान्य)स्त्रीजनानां वेषोऽपि दीन एव। अस्माकं स्त्रीणां शाटी तथा पुरुषाणां चोगा[१७]-चापकान-पागडीनां सौन्दर्यस्य धरायां तुलना नास्ति। पुटोपरि पुटान्तरं न्यस्य विनिर्मिते वेषे यावद् रूपं विद्यते न तथा दृढसंबद्धे। सर्वो ह्यस्माकं वेषः पुटसज्जितः, किन्त्वस्माकमुद्योगोचितो वेषो नास्ति, उद्योगाश्रये सति कृत्स्नो वेषो विसर्जितो भवति। एतेषां भूषा वस्त्रे, अस्माकं भूषाऽलङ्कारे, अधुना कियती वेषेऽपि दृश्यते।

का नाम भूषा? उच्यते भङ्गीति। स्त्रीणां वस्त्राणां भङ्गी प्यारिस्-नगरादुद्भवति, पुरुषाणां लण्डन-नगरात्। प्राक् प्यारिस्-नगरस्य नर्तक्यो भङ्गिमेतां परिवर्तयन्ति स्म। काचन विख्याता नटी यादृशं वेषं परिहितवती सर्वा एव क्षणात् तस्यानुसरणाय धाविताः। अधुनाऽपणिका भङ्गिं सृजन्ति। धनानां कति कोटय एतस्य वेषस्य निर्माणार्थं प्रतिवर्षमपेक्षितास्तन्नास्माकं बोधगोचरः। एतद् वेषनिर्माणमेकं महच्छास्त्रं सञ्जातम्। कस्या योषायाः शरीरस्य केशस्य च वर्णेन किंवर्णकं वस्त्रं सज्जामर्हेत्, कस्याः शरीरस्य को नामावयवो गोपनीयः, कश्च प्रकाश्य इत्यादिकं बहुलं विचिन्त्य वेषो निर्मीयते। अपि च काश्चनोच्चपदमधिष्ठिता योषितो यत् परिदधति तदेवान्यैः सर्वैः परिधानीयमन्यथा जातिर्नाशमुपैति!! इयमेव भूषा! पुनरेषा भूषा प्रतिगृहं परिवर्तते, एकस्मिन् वर्षे ऋतुषु चतुर्षु वारचतुष्टयं परिवर्तनं स्यादेव, तदतीत्यान्यस्मिन्नपि समये भवति।

ये खलु धनिनस्ते सौचिकैर्वेषं निर्मापयन्ति, ये पुनर्मध्यवित्ताः शिष्टास्तेषां कतिचित् स्वयं नवीनप्रकारकं वेषं रचयन्ति कतिचिच्चाख्याताभिः सौचिकरमणीभिर्निर्माप्य गृह्णन्ति। अनन्तरमाविर्भवन्ती भूषा चेत् पूर्वसमीपवर्तिनी स्यात्तदानीं पुरातनमेव वस्त्रं तथा परिवर्तयेयुरन्यथा नूतनं क्रीणन्ति। धनिन ऋतुषु सर्वेषु वस्त्राणि भृत्यादिभ्यः संप्रयच्छन्ति, मध्यवित्ता विक्रीणते। तदेतानि वस्त्राणि इउरोपीयानां येऽधिनिवेशाः सन्ति यथा आफ्रिकायाम्, एशियायाम्, अस्ट्रेलियायाम्—तेषु समुपगच्छन्ति, परिदधति च तानि तत्रत्या जनाः। ये चात्यन्तं धनिनस्तेषां वस्त्राणि प्यारिस्-नगराद् निर्मीयमाणान्यागच्छन्ति, अन्ये स्वदेशे तदनुकृत्य निर्माय वसते। अङ्गनानां शिरोभूषणं तु यथार्थतः फरासीदेशीयं स्यादेव। यस्यास्तन्न भवति नासौ योषित्पदवाच्या।

इंरेजनारीणां जार्मान-नारीणां च वेषो नितरामशोभनः, न हि ताः प्यारिस-भङ्ग्या वेषं धारयन्ति—कियतो धनिनो वर्जयित्वा। अतोऽन्यदेशीयाः स्त्रियस्ता

उपहसन्ति। इंरेजपुरुषाः परन्तु बाहुल्येन शोभनं वेषं धारयन्ति। आमेरिकायाः पुरुषाः स्त्रियश्च सर्वं एव सुभङ्गिकं वेषं वसाना भवन्ति। यद्यपि आमेरिका-सर्वकारः प्यारिस्-नगरात् लण्डन-नगराद् वा समानीतानां वेषाणामुपरि प्रभूतं करं न्यस्यति येन विदेशीयं द्रव्यमेतस्मिन् देशे नागच्छेत् तथापि करप्रदानेनापि स्त्रियः प्यारिस्-नगरे निर्मितं वेषं दधति पुरुषाश्च लण्डने निर्मितम्। विविधानि बहुवर्णानि वस्त्राणि—और्णानि, ऊतयः क्षौमाणि च—प्रतिदिनं प्रकाशमायान्ति, जनानां लक्षाणि तत्र सन्नद्धानि, लक्षाणि च तान्येव दृष्ट्वा छित्वा च वेषं रचयन्ति। सुभङ्गीकश्चेद् वेषो न भवति तर्हि शिष्टपुरुषस्य शिष्टाया वा नार्याः पथि निष्क्रमणमेव दुष्करम्।

अस्मद्देशे भूषाक्लेशोऽयमलङ्कारे किञ्चित् प्रविशति। एतेषां देशानामूर्णाक्षौम-तन्तुवायानां दृष्टिर्नक्तन्दिवं खलु किं परिवर्तते किं वा न, का वा लोकानामभि-रुचिरित्येतस्मिन्। अथवा नूतनं किञ्चित् प्रणीय लोकानां मनो हर्तुं ते यतन्ते। ऊहश्चेदेकदा सफलस्तदा स वणिग् धनी सम्पद्यते। यदा तृतीयो न्यापलेओँ फरासीदेशस्य सम्राडासीत्तदा सम्राज्ञी अजेनिः[३८] पाश्चात्यजगतो वेषभूषाया अधिष्ठात्री देवी व्यभवत्। काश्मीर-प्रावरणं तस्याः प्रियमभवत्। अतो धनानां लक्षैः परिमितं प्रावरणं प्रतिवर्षम् इउरोपदेशेनाक्रीयत। तस्याः पतन-मारभ्य सा भङ्गी परिवर्तिता। प्रावरणं न पुनर्विक्रीयते। अस्मद्देशीयाः पुनः क्षुण्णमेव मार्गमनुसरन्ति, नूतनं किञ्चिद् विरच्य यथाकालं विपणिं ग्रसितुं न समर्था जाताः। काश्मीरदेशः प्रचण्डमाघातं लेभे, महान्तो वणिजो निर्धना जाताः।

संसारोऽयं 'पश्यसीति तव, न पश्यसीति मम', किं कोऽपि कस्यापि कृते तिष्ठत्य-पेक्षमाणः? ते हि दशाक्षाः पश्यन्ति, हस्तानां शतद्वयेन श्राम्यन्ति, वयन्तु यन्नाम 'गोस्वामिपादेन ग्रन्थे न लिखितम्' तन्न जातु करिष्यामः, करणे शक्तिरपि गता। अन्नं विना हाहाकारः, दोषः कस्य? प्रतिविधानार्थं प्रयत्नस्तु नास्त्येव, केवल-मुच्चनिर्घोष इत्यलम्। गृहकोणाद् निर्गच्छ तावत्, कीदृशमेतज्जगदित्यालोक्य-ताम्। स्वत एव बुद्धिवैचक्षण्यं समागमिष्यति।

देवासुरयोः कथा खलु ज्ञायत एव। आस्तिका हि देवाः, आत्मनि विश्वसन्ति, ईश्वरे परलोके च। असुरैरुच्यते—इहलोके पृथिवीयं भुज्यताम्, देहोऽयं सुखी सम्पाद्यताम्। देवाः सम्यगुतासुरा इति त्वन्यत्। वरं पुराणोक्ता असुरा एव मनुष्यवद् दृश्यन्ते, देवास्तु बृहदंशेन हीनाः। अधुनाऽवगम्यते चेद् यद् यूयं देवतायाः सन्ततयः पाश्चात्याश्चासुराणामिति तदानीमेव देशद्वयं सम्यगवगमिष्यथ।

## परिच्छन्नता

दृश्यतां शरीरमेव तावदाद्यम्। बाह्या चान्तरा च शुद्धिर्नाम पवित्रता। मृज्जलादिना शरीरं शुध्यतीत्युत्तमम्। जगति न कुत्राप्येतादृशी जातिर्विद्यते येषां शरीरं हिन्दूनामिव परिष्कृतम्। अतीत्य हिन्दून् नान्या कापि जातिर्जलेन शौचं विदधाति। तथापि चीनैः पाश्चात्याः पत्रव्यवहारोऽध्यापिता इति ते (पाश्चात्त्याः) रक्षिताः। स्नानमपि तेषां नास्तीव। इदानीम् इंरेजैर्भारतमागत्य स्वदेशे स्नानं प्रवर्तितम्। तथापि ये खलु बाला इउरोपखण्डे पठित्वा समागतास्ते पृच्छ्यन्ताम्, स्नानस्य कीदृशः क्लेशः! यच्च स्नानमनुष्ठीयते तत् सप्ताहे सकृदेव, तस्मिन्नेव दिवसे तैरन्तर्वासः परिवर्त्यते। सत्यं यदद्य त धनिनां बहवो नित्यस्नायिनः। आमेरिकावासिनः कथञ्चिद् भूयांसः! जार्मानदेशीयाः कदाचिदेव, फरासीदेशीयास्तदाद्या अन्ये च न कस्मिन्नपि काले!!! स्पेनदेशः इतालीदेशश्चोष्णः, तत्र नतराम्—राशीकृतस्य लशुनस्य भक्षणं क्रियते, अहोरात्रं घर्माक्तास्तिष्ठन्ति, सप्तस्वपि जन्मसु जलस्पर्शोऽपि न क्रियते! तादृशेन शरीरदौर्गन्ध्येन प्रेतानां चतुर्दश पुरुषाः पलायन्ते —प्रेतास्तु शिशव एव! किं नाम स्नानम्—मुखस्य मस्तकस्य हस्तयोश्च प्रक्षालनं यद्धि बाह्यतो दृष्टिगोचरो भवेत्। किमन्यत्! प्यारिस्, सभ्यताया राजधानी प्यारिस्, वर्ण-भङ्गी-भोग-विलासानां भूस्वर्गः प्यारिस्, विद्याशिल्पयोः केन्द्रं प्यारिस्—तत्रास्मिन् प्यारिस्-नगरे कश्चन महाधनो बन्धुरेकस्मिन् वर्षे मां निमन्त्रणेन समानीतवान्। एकं प्रासादोपमं महान्तं पान्थनिवासं समानीय स्थापयामास—राजभोग्यं भक्ष्यं परन्तु स्नानस्य नामापि नास्ति। दिवसद्वयं तथैव सोढ्वा पश्चान्न पारितम्। अन्ततो मित्रायावश्यं निवेदितम्—अहो अग्रज, तवायं राजभोगस्तवैव भवतु, मम चाधुना 'त्यज मातः, क्रन्दनेन जीवामि' इति जातम्। एतावान् दारुणोऽयं ग्रीष्मकालः, तत्र च स्नानस्य नावकाशः, क्लान्तकुक्कुरवद् भवामीव। तदा बन्धुरयं दुःखितः क्रुद्धश्च सन्नाह—एतादृशे पान्थनिवासे स्थितिर्न भविष्यति, तदागम्यतां, कश्चन प्रशस्यतरो निवासो निरूप्य गृह्यताम्। द्वादश मुख्या आवासा अन्विष्टाः, स्नानाय स्थानं न कुत्रापि विद्यते। पृथक् स्नानागाराः सन्ति यत्र गत्वा चतुष्पञ्चकानि रूप्यकाणि प्रदाय सकृत् स्नानं भविष्यति। हरेर्नाम, हे हरे! तस्मिन् दिने सायं पत्रिकायां पठितं यदेका वृद्धा स्नानार्थं द्रोणावुपाविशत्, तत्रैव चोपरता!! आ जन्मनः सकृदेव वृद्धायास्त्वचा जलस्पर्शमात्रेणैव तस्या नाशः!! एतस्य कश्चन वर्णोऽपि नातिरञ्जितः। रुशादयस्तु मूलम्लेच्छाः, तिब्बतादेव तादृश्या भङ्ग्याः प्रारम्भः। आमेरिकायां त्वेकैकस्मिन् वासगृह एकैकः स्नानागारो विद्यते, जलार्थं नलसंयोगोऽप्यस्ति।

परमत्र वैलक्षण्यमीक्ष्यताम् ! कथमस्माभिः स्नानं क्रियते ?—अधर्मभयाद्, पाश्चात्या मुखं हस्तौ प्रक्षालयन्ति नैर्मल्यं प्राप्स्यन्तीति। अस्माकं जलपातन-मेवापेक्षितम्, तदत्र शरीरं तैलप्रचुरं तिष्ठतु, अथवा मालिन्यं संसक्तमेव भवतु। पुनर्दाक्षिणात्यो भ्राता स्नात्वा लम्बितमायतं चैतादृशं तिलकं व्यलिपद् यत् सुषिरेण प्रस्तरखण्डेन घृष्ट्वापि तस्यावमार्जनं दुःशकम्। अस्माकं तु स्नानं सरलम्, यत्र कुत्राप्यवगाहनमात्रम्। तेषाम्—वस्त्रराशिरुन्मोचयितव्यः, कीदृशं वा तेषां बन्धनम् ! नास्माकं शरीरप्रदर्शने लज्जास्ति, तेषां तु सुमहती। परन्तु द्वयोः पुरुषयोर्मध्ये न लेशतोऽपि, पिता पुत्रस्य समक्षं नग्नो भवति—नास्ति दोषः। स्त्रीणां सविधे तैरापादमस्तकमाच्छादनीयम्।

बाह्याचारः शरीरपरिष्कारो वा कदाचिदितराचारवदत्याचारस्वरूपेण, अनाचारस्वरूपेण वा परिणमते। इउरोपीयो ब्रवीति यच्छरीरसम्बन्धि समस्तं कार्यं नितान्तं रहसि करणीयम्। उत्तमः कल्पः। दूरमपास्तमिदं शौचादि कर्म, लोकानां मध्यतो निष्ठीवनमपि सुमहदशिष्टं कर्म ! भुक्त्वा सर्वेषां समक्षमाचमनं नितरां लज्जार्हं यतस्तस्मिन् कर्मणि जलेन मुखान्तर्धावनं विद्यते। लोकलज्जाभयाद् भोजनं समाप्य मुखं सम्मार्ज्योपविशति—क्रमेण दन्तानां सर्वनाशो भवति। सभ्यताभिया भवत्यनाचारः। अस्माकं पुनः पृथिव्या यावतां जनानां पुरस्ताद् रथ्यायामुपविश्य वमनमनुकृत्य मुखधावनं दन्तमार्जनं तथाऽऽचमनमिति सर्वोऽयमत्याचारः। सर्वं तत् कार्यं रहसि करणीयं नूनं, परमकरणमप्यनुचितम्।

पुनर्देशभेदाद् यत् खलु कार्यजातमनिवार्यं तद्धि समाजेन सोढ्वा गृह्यते। अस्माकं ग्रीष्मबहुले देशे भोजनार्थमुपविष्टा वयं घटार्धं जलं पिबामः—अथोद्गारं विना कथं परित्राणम् ? परन्तु पाश्चात्त्ये देश उद्गारो हि नितरामशिष्टोचितं कर्म। किन्तु भोजनकाले करवस्त्रं निष्कास्य सुखेन नासिकामलमुत्सृज—न तथा दोषमावहति, अस्मद्देशे जुगुप्सितं ह्येतत्। एतादृशे शीतले देशे मध्ये मध्ये नासामलमनुत्सृज्यावस्थानं दुष्करम्।

मालिन्यमत्यन्तं द्विष्ट्वा वयं बहुत्र मलिनाः सन्तो विद्यमानाः। मालिन्यं प्रत्यस्माकमेतादृशी जुगुप्सा यत् स्पर्शे सति स्नानं क्रियते। तद्भयात् स्तूपाकारस्य मलस्य द्वारपार्श्वे पूतीभवनमनुमतम्। स्पर्शो न जात इत्यलम्। इतश्च नरक-कुण्डे वासो भवति, तस्य किम् ? एकस्मादनाचाराद् भयमित्यन्यो महाघोरो-ऽनाचारः। एकस्य पापस्य परिहारार्थं गुरुतरं पापान्तरं क्रियते। यस्य गृहे मालिन्यं स पापीत्यत्र कः सन्देहः ? तदर्थं शास्तिस्तेन मरणानन्तरं न प्राप्यम् —अपेक्षापि तदर्थं न भूयसी कर्तव्या।

अस्मदीयं रन्धनमिव परिष्कृतं रन्धनं न कुत्राप्यस्ति। इउरोपीयभोजनस्य

यथा शृङ्खला परिष्कृता पद्धतिर्विद्यते न तथाऽस्माकमस्ति। अस्माकं पाचकः स्नानं कृतवान् वस्त्रं च परिवर्तितवान्। स्थाल्यादिकमुखा च सर्वं प्रक्षाल्य सम्मार्ज्य च परिष्कृतवान्। नासिकायां मुखे शरीरे हस्तस्पर्शश्चेद् भवति तदानीमेव हस्तं निर्णिज्यैव पुनः खाद्यद्रव्यं स्पृशति। इउरोपीयपाचकस्य चतुर्दशसु पुरुषेषु न कोऽपि स्नानं चकार, पचन्नेव स्वादं गृह्णाति, पुनस्तमेव चमसं स्थाल्यां प्रवेशयति।

करवस्त्रं निष्कास्य सशब्दं नासामलमुत्सृष्टवान् पुनस्तेनैव हस्तेन गोधूमचूर्णं म्रक्षति स्म। शौचं कृतवान्—पत्रव्यवहारेण, तस्य हस्तस्य प्रक्षालनस्य नामापि नास्ति—तेन हस्तेन रन्धनं प्रारभत। वस्त्रं तु सुशुभ्रं, शिरोभूषणमपि परिहितम्। एवमपि स्याद् यदेकस्यां विशालायां काष्ठद्रोण्यां मनुष्यद्वयं नग्नं भूत्वा तिष्ठद् राशीकृतस्य गोधूमचूर्णस्योपरि नृत्यति—किं भवति, गोधूमचूर्णस्य म्रक्षणं भवति। ग्रीष्मो कालः, दरविगलितो घर्मः पादाभ्यां प्रवहन् गोधूमचूर्णे तस्मिन् प्रविशति। ततस्तस्यापूपो यदा निर्मितस्तदा दुग्धफेननिभस्य वस्त्रखण्डस्योपरि चीनपात्रे सज्जितः सन्, परिष्कृतवस्त्रास्तीर्णस्य काष्ठाधारस्योपरिष्टात्, निर्मलवस्त्रमादधानेन कफोणिपर्यन्तं शुभ्रवर्णं हस्तत्राणं धारयता भृत्येनानीय पुरतः समुपस्थापितः! किमपि द्रव्यं न करेण संस्पृष्टं स्यादिति कफोणिपर्यन्तं हस्तत्राणम्।

अस्माकं स्नातः पाचकः, निर्मले भाजने शुद्धायां स्थाल्यां शुद्धः सन् पक्त्वा गोमयसिक्तायां मृत्तिकायां पात्रसमेतमन्नं व्यञ्जनं च विसृजति, पाचकस्य वस्त्राद‌ङ्गुलिपीडनेन मलमागच्छति। रम्भापत्रस्य त्रोटनाद् मृत्तिका मलं गोमयः सूप इति सर्वमेकाकारं सदेकमपूर्वमास्वादं जनयति वा!!

वयं सुखेन स्नात्वा किञ्चन तैलाक्तं मलिनं वस्त्रं परिदध्मः, इउरोपे तु मलिने शरीरे स्नानमकृत्वा सुशुभ्रमेकं वेषं परिदधति। सम्यगेतदवगच्छ, आमूलचूडं भिद्यतेऽत्र—हिन्दूनां येयमन्तर्दृष्टिः सा खल्वाद्योपान्तं सर्वस्मिन् कर्मणि। हिन्दुश्छिन्नेन वस्त्रखण्डेन वेष्टयित्वा दुर्मूल्यं हीरकं स्थापयति, इउरोपीयः सौवर्ण्यां पेटिकायां मृत्पिण्डं स्थापयति! हिन्दूनां शरीरपरिष्कृतिरेवाभीष्टा, वस्त्रं यथा तथा भवतु! इउरोपीयस्य वस्त्रशुद्धिरेवापेक्षिता, शरीरे मालिन्यं स्यान्नाम! हिन्दूनां गृहं द्वारं च प्रक्षाल्य सम्मार्ज्य शुद्धं, ततो वहिर्नरककुण्डमस्तु नाम! इउरोपीयस्य गृहतलं कुथेनावृतं समुज्ज्वलं च, मलं सर्वमावृतमित्यलम्!! हिन्दूनां पयोनाली मार्गोपरि—दुर्गन्धेन न तथा कश्चन विशेषो भवति। इउरोपीयानां पयोनाली मार्गस्याधः—सान्निपातिकज्वरस्यावासः!! हिन्दुरान्तरं शोधनं विदधाति। इउरोपीयो वाह्यं शोधनं करोति।

किमपेक्षितम् ?—शुद्धे शरीरे परिष्कृतस्य वस्त्रस्य परिधानम्। मुख-प्रक्षालनं दन्तमार्जनं च सर्वमावश्यकं किन्तु रहसि। गृहं परिष्कृतं स्यात्। मार्गादिकमपि परिष्कृतं स्यात्। परिष्कृतः पाचकः, परिष्कृतेन हस्तेन च रन्धन-मपेक्षितम्। पुनः परिष्कृते रम्ये स्थाने परिष्कृते भाजने भोजनमपेक्षितम्—'आचारः प्रथमो धर्मः'।[१९] आचारस्य प्रारम्भश्च नैर्मल्येन—सर्वथा निर्मली-भवनेन। आचारभ्रष्टस्य कदापि धर्मः स्याद्वा ? अनाचारविशिष्टस्य दुःखं न पश्यसि किम् ? दृष्ट्वापि न शिक्षां लभसे ? एतावती विसूचिका, महामारी, म्यालेरिया—कस्य दोषः ? अस्माकं दोषः। वयं हि नितरामाचारबहिर्भूताः ! ! !

## आहारः पानीयं च

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिरिति शास्त्रवाक्यमस्मद्देशीयैः कृत्स्नैः सम्प्रदायैरुररीक्रियते। परं शङ्कराचार्यस्य मते 'आहार'-शब्दस्यार्थः खल्विन्द्रियलब्धं विषयज्ञानं, रामानुजाचार्यस्य मते तु भोज्यं द्रव्यम्[२०]। सर्ववादि-सम्मतः सिद्धान्तोऽयं यदर्थद्वयमेव यथार्थम्। विशुद्धमाहारं विना यथायथ-मिन्द्रियाणि कथं वा कार्यं साधयेयुः ? कदन्ने भक्षित इन्द्रियाणां ग्रहणशक्ति-ह्र्‌ासमुपैति विपर्येति वेति सर्वजनीनं प्रत्यक्षम्। अतिसारदोषादेकस्य वस्तुनो-ऽन्यथात्वेन भ्रमस्तथा भोजनाभावाद् दृष्ट्यादिशक्तेर्ह्रासश्च सर्वेषामवगतम्। तथाऽऽहारविशेषः शारीरिकं मानसिकं चावस्थाविशेषमुपस्थापयतीति भूयोदर्शन-सिद्धम्। अस्माकं समाजे यदेतावत् खाद्याखाद्यनिर्वाचनं तस्यापि मूले निहित-मेतत् तत्त्वम्, यद्यपि वयमधुना बहुषु विषयेषु वस्तु विस्मृत्य तदाधारं गृहीत्वा कर्षणं घर्षणं च कुर्मः।

रामानुजाचार्यो भोज्यद्रव्यस्य दोषत्रयं वर्जनीयत्वेन समुल्लिखितवान्। जातिदोषो हि स दोषो यो भोज्यद्रव्यस्य जातिगतः, यथा पलाण्डुलशुनाद्युत्तेजक-द्रव्यभक्षणेन मनसि चाञ्चल्यमायाति बुद्धिभ्रंशो वा भवति। आश्रयदोषो हि स यो व्यक्तिविशेषस्य स्पर्शादागच्छति, दुष्टलोकस्यान्नं भक्षितं चेद् दुष्टा बुद्धि-रागमिष्यत्येव, सदन्नेन सद्बुद्धिरित्यादि। निमित्तदोषो यथा—मलिनं कुत्सितं कीटकेशादिदुष्टमन्नं भुक्तं चेदपूतं मनो भविष्यति। एतेषु दोषेषु जातिनिमित्त-दोषाभ्यां परित्राणार्थं प्रयत्नः खलु सर्वैरेव कर्तुं शक्यते, आश्रयदोषात् परित्राणं न सर्वैः सुशकम्। एतस्मादाश्रयदोषात् परित्राणमभिप्रेत्यैवास्मद्देशे स्पृश्यास्पृश्य-विचारः—'न स्पृश्यं न स्पृश्यम्'। तद् बहुषु स्थलेषु 'विपरीतमवगतं रामेण'

इति भवति, तथाऽर्थानवगमाद् विसदृशः कश्चन कुसंस्कारः समायाति। अत्र लोकाचारं परित्यज्य लोकगुरूणां महापुरुषाणामाचार एव ग्रहणीयः। श्रीचैतन्यदेवादीनां जगद्गुरूणां जीवनं तावत् पठ्यताम्, कीदृशं हि ते विषयेऽस्मिन् व्यवहारं कृतवन्तः। जातिदुष्टान्नभोजनमधिकृत्य भारतवर्षवत् किमपि शिक्षास्थलं पृथिव्यां कुत्रापि नास्ति। समग्रे भूमण्डलेऽस्मद्देशवत् पवित्रमाहारं भुङ्क्त इत्येतादृशः कोऽपि देशो नास्ति। निमित्तदोषस्य विषये वर्तमाने काले निदारुणं भयावहाऽवस्था जाता। मोदकापणं विपण्यां भोजनमिति सर्वमेतन्नितान्तमपूतमिति दृश्यत एव, कीदृशं निमित्तदोषदुष्टं मलमुत्करः पूतिपक्वं द्रव्यं तत्रास्ति—अतः फलति खल्वेतत्। योऽयं प्रतिगृहमतिसारः स मोदकापणे विपणौ च भोजनस्य फलम्। पल्लीग्रामे जनानां न तथाऽतिसारदोषो न वा प्रस्रावरोगस्तस्य प्रधानो हेतुः 'लुचि-कचुरि'-प्रभृतीनां विषलड्डुकाना[१]-मभावः। विस्तीर्यैतदुपरिष्टाद् वक्ष्यते।

गतोऽयं भोजनादिसम्बन्धी प्राचीनः साधारणो नियमः। नियमेऽस्मिन् पुनर्बहूनि मतानि प्राचीनकालेऽप्यचलन्, वर्तमानकालेऽपि चलन्ति। प्रथमतः, प्राचीनकालादारभ्य वर्तमानकालपर्यन्तं वर्तते कश्चन महान् विवादः—आमिषमुत निरामिषम्। मांसभोजनमुपकारकमुतापकारकम् ? तदतीत्य जीवहननं न्याय्यमन्याय्यं वेति प्रसृता सनातनी काचन महती वितण्डा। एकः पक्षो वदति—न केनापि कारणेन हत्यारूपं पापं समीचीनम्। वदति चान्यः पक्षः—त्यज्यतां ते मतं, हत्यारूपं पापं विना प्राणधारणमेवासम्भवि। शास्त्रानुगेष्वेव सुमहान् कोलाहलः। शास्त्रेणैकदा प्रोच्यते—यज्ञस्थले हत्यां कुरु, पुनरुच्यते जीवहननं न कर्तव्यमिति। हिन्दुभिरेवं सिद्धान्तितं यद् यज्ञादन्यत्र विहिता हिंसा पापजनिका। परन्तु यज्ञमनुष्ठाय सुखेन मांसं भक्षय। गृहस्थानामपि केचन नियमाः सन्ति यत्र हिंसायामकृतायां पापं भवति यथा श्राद्धादौ। तेषु स्थलेषु निमन्त्रितः सन् यदि मांसं न भक्षयेत्तदा पशुजन्म भवतीति मनुना प्रोक्तम्[२]। अपरस्मिन् पक्षे जैनबौद्धवैष्णवैरुच्यते—न वयं तव शास्त्रं श्रद्दध्मः, हिंसा न कथमपि चलिष्यति। बौद्धसम्राडशोको यज्ञमनुतिष्ठन्तं निमन्त्रणेन मांसं खादयितारं च दण्डयति।

आधुनिको वैष्णवः खलु कथञ्चित् कूटमापन्नः, प्रभुस्तेषां रामः कृष्णो मद्यं मांसं च सुखेन निःशेषयति, विद्यते चैतद् रामायणे महाभारते च। सीतादेवी गङ्गायै मांसं भक्तं तथा घटानां सहस्रं मद्यं प्रतिशृणोति[३]। वर्तमानकाले शास्त्रमपि न श्रोष्यति, महापुरुषेणोक्तमित्यपि न श्रूयते। पाश्चात्त्यदेश एतैः संघर्षः क्रियते यद् मांसभक्षणेन रोगो भवति निरामिषाशी नीरोगो भवतीत्यादि। एकः पक्षो ब्रूते—मांसाशिनो यावान् रोगः। अपरः पक्षो ब्रवीति—कथैव सा,

तथा सति हिन्दवो नीरोगाः स्युः, इंरेजा आमेरिकावासिनः प्रभृतयो मुख्या मांसाशिन्यो जातयो रोगाल्लुप्ताः स्युरेतावति काले। एकः पक्षः प्राह—छागभक्षणाच् छागस्येव वृद्धिर्भवति, शूकरभक्षणाच्च शूकरस्येव, मत्स्याशनाद् मत्स्यस्येव। अन्यः पक्षो वदति—कपिनामकशाकभक्षणात् कपिशाकवद् वृद्धिर्भविष्यति, गोलालुभक्षणाद् गोलालुवद् वृद्धिः, भक्ताशनाद् भाक्ता वृद्धिः। जडवृद्धेश्चैतन्यवृद्धिर्वरम्। एकः पक्षो ब्रूते—भक्ते वैदले च यदस्ति, मांसेऽपि तदेव। अपरः पक्षः प्राह—वायावपि तदेवेति त्वया वायुसेवनेनास्यताम्। एकः पक्षो वदति —निरामिषभोजनेनापि जनैः कियान् परिश्रमः कर्तुं शक्यते। प्रोक्तमपरेण पक्षेण—तथा सति निरामिषमदन्ती जातिरेव प्रधाना स्यात्, चिरं मांसं खादयन्ती जातिरेव बलवती प्रधाना च। मांसाहारिणाऽभिधीयते—हिन्दुं चीनदेशीयं च पश्य, भोजनं न लभ्यते, भक्तं शाकपत्रादिकं च भुक्त्वा ते म्रियन्ते, तेषां दुर्दशामामालोकय—जापानदेशीया अपि तथैवासन्, मांसाहारं प्रारभ्य तेषामवस्था परिवर्तिता। भारतवर्षे सार्धलक्षं भारतीया योद्धारः, एतेषां कति जना निरामिषं खादन्तीति दृश्यताम्। उत्तमो योद्धा, गोरखा वा शिखो वा, कः कदा निरामिषाशीति समीक्ष्यताम्। उक्तमेकेन पक्षेण यद् मांसाहारादतिसारो भवति, इतरेण चोच्यते—सर्वो भ्रमः, निरामिषाशिनामेव यावन्त उदररोगाः। पक्षेणैकेन प्रोच्यते—तव कोष्ठशुद्धिरोगः शाकपत्रादीनां भक्षणाद् विरेचकवदुपशान्तो भवति, तत् किं पृथिव्याः सर्वैरेव तत् कर्तव्यमिति त्वयाभिलष्यते? फलितमेतद् यद् मांसाशिन्यो जातयश्चिरं युद्धवीराश्चिन्ताशीला इत्यादि। मांसाशिन्यो जातयो वदन्ति यद् यदा यज्ञधूमो देशं व्याप्य समुच्चरित आसीत्तदानीमेव हिन्दूनां मध्ये तीक्ष्णधियां प्रादुर्भावः समभूत्, मेदोबहुलवैष्णवसमुत्पत्तिकालादारभ्य न ह्येकोऽपि मनुष्यो जातः। अत एव मांसाशिभिर्न मांसाहारस्त्यक्तुमिष्यते। अस्माकं देशे प्रसृतोऽयं विवाद आर्यसमाजसम्प्रदायस्य मध्ये। एकेन पक्षेणाभिधीयते—मांसाशनमेकान्तमावश्यकम्। पक्षान्तरेणोच्यते—असङ्गतमिदमेकान्ततः। चलतीदृशो वाद-विवादः।

पक्षद्वयं समीक्ष्य संश्रुत्य च ममायं स्थितो विश्वासः—हिन्दव एव सम्यक्, अर्थाद् येयं हिन्दूनां व्यवस्था यज्जन्मकर्मभेदादाहारादि सर्वं पृथगेवेति सिद्धान्तः। मांसभोजनमवश्यमसभ्याचरणं निरामिषभोजनं च नूनं पवित्रतरम्। यस्योद्देश्यं केवलं धर्मजीवनं तस्य निरामिषं सम्यक्। येन तु परिश्रम्यायस्य चाहोरात्रं संसारस्यास्य प्रतिद्वन्द्वानां मध्यतो जीवनतरी वाहनीया तेन हि मांसं भक्षणीयमेव। यावन्मनुष्यसमाजे भावोऽयं स्थास्यति यद् 'बलवतां जयः' तावन्मांसं भक्ष्यमथवा मांसवदन्यः कोऽप्युपयोग्याहार आविष्करणीयः। नोचेद् बलवतः पदतले दुर्बलः पिष्टो भविष्यति! रामः श्यामो वा निरामिषं खादित्वा सम्यग्

विद्यत इति वचनेन न कार्यं भविष्यति—जात्या सह जात्यन्तरस्य तुलनां कृत्वा दृश्यताम्।

अस्माकं निरामिषाशिनां मध्येऽपि भवति कलहः। एकः पक्षो वदति—भक्तं, गोलालुः, गोधूमः, यवः, जनार इत्यादि शर्करावहुलं खाद्यमपि न किञ्चित्, सर्वं तद् मनुष्येण विनिर्मितं, सर्वेषामेषां भोजनादेव यावान् रोगः। शर्कराजनकं खाद्यमेव रोगाणामागारः। गामश्वमपि गृहे स्थापयित्वा तण्डुलं गोधूमं खादयसि चेत्तदाऽसौ रोगी भविष्यति, पुनः क्षेत्रे चरन् नूतनं शष्पं भुञ्जानो रोगान्मुच्यते। तृणशाकपत्रादिषु हरितेषूद्भिज्जेषु शर्कराजनकः पदार्थो नितरां स्वल्पः। आरण्यकजातिर्वातामफलं तृणं चात्ति, गोलालुं गोधूमं च न भुङ्क्ते, यदि भुञ्जीतापि तर्हि वाहुल्येन शर्कराजननात् प्राक् तेषामपक्वावस्थायाम्। एवं वहुविधः कलहश्चलति। ब्रवीत्येकः पक्षः—शूल्यं मांसं, यथेष्टं फलं, दुग्धं चैतन्मात्रं भोजनं दीर्घजीवनाय भवति। फले विशेषः, फलाहारी सुदीर्घकालं युवा स्थास्यति यतः फलानामम्लरसोऽस्थिषूत्पद्यमानं मालिन्यं विनाशयति।

अधुना सर्वसम्मतमभिमतमेतद् यत् पौष्टिकं सुपाच्यं च खाद्यं खादनीयम्। स्वल्पायतनं वाहुल्येन पुष्टिकरमथच सुपाच्यं भोजनं भोक्तव्यम्। यस्मिन् भोजने पुष्टिः स्वल्पा तदत एव भस्त्रापरिमितं भोक्तव्यं भवति, अत एव च तस्य परिपाकार्थं कृत्स्नं दिनमेवापेक्ष्यते। यदि परिपाक एव सर्वा शक्तिर्व्ययिता तर्हि कर्मकरणार्थं शक्तिरवशिष्यते वा ?

भृष्टानि द्रव्याणि साक्षाद् विषमेव। मोदकापणं यमगृहम्। घृततैलं ग्रीष्मे देशे यावत् स्वल्पं भक्ष्यते तावदेव कल्याणम्। घृतान्नवनीतं शीघ्रतरं पच्यते। यन्त्रपिष्टे गोधूमचूर्णे न किमप्यस्ति, श्वेतं तद् दृश्यत इत्येव। गोधूमस्य कृत्स्नो भागो यत्र विद्यते, तादृशं गोधूमचूर्णम् ('आटा' इति प्रसिद्धं भाषायाम्) सुखाद्यम्। अस्माकं वङ्गप्रदेशे सुदूरे पल्लीग्रामे यादृशस्याहारस्य व्यवस्थास्ति स एव प्रशस्तः। अपि नाम कोऽपि वङ्गीयः प्राचीनः कविः लुचि-कचुरि इत्यादेवर्णनं कृतवान्? तादृशं लुचि-कचुरि इत्यादि द्रव्यं पश्चिमप्रान्तादागतम्। तत्रापि कदाचिदेव लोकस्तदत्ति। अविरतं पक्वभोजनं खाद्यत इत्येतादृशो लोको न दृष्टः। मथुराया मल्लश्चोवेमहोदयो लुचिलड्डुकप्रिय इति द्वाभ्यामुत चतुर्भ्यो वर्षेभ्योऽनन्तरं चोवेमहोदयस्य परिपाकस्य सर्वनाशो भवति, स च चूर्णं भक्षयन्नास्ते।

दरिद्रा अन्नाभावादनाहारेण म्रियन्ते, धनिनस्त्वखाद्यं खादित्वाऽनाहारेण मृत्युमुपयन्ति। यस्य कस्याप्युदरसात्करणात् वरमुपवासः। मोदकापणस्य खाद्यद्रव्येषु न किमपि विद्यते, सम्पूर्णं विपरीतं विद्यते—विषं विषं विषम्।

पूर्वस्मिन् काले जनाः कदाचिदेव तादृशं पापद्रव्यं खादन्त आसन्। अधुना नगरवासिनां, विशेषतो ये प्रवासिनो नगरमधिवसन्ति तेषां, नित्यं भोजनं तदेव। एतेनातिसाररोगादपमृत्युर्भविष्यतीति किं विचित्रम्! क्षुधाजननेऽपि कचुरि-जिलिपिप्रभृतीनि खाद्यानि दूरं निक्षिप्य केवलमानकस्य चतुर्थांशेन भृष्टतण्डुलं क्रीत्वा भक्षय—अल्पार्घमपि भविष्यति, भोजनमपि किञ्चिद् भविष्यति। भक्तं, वैदलः, गोधूमचूर्णनिर्मितभृष्टपिष्टकं, मत्स्यः, शाकः, दुग्धमिति यथेष्टमेतत् खाद्यम्। वैदलः खलु दाक्षिणात्यवदेव भोक्तव्यः, अर्थात् केवलं वैदलसूपः, शिष्टो भागो गोभ्यो देयः। मांसाशनार्थं धनं विद्यते चेत् खाद्यताम्, परन्तु पश्चिम-प्रान्तागतोष्णगन्धाञ्जनानि वर्जयित्वा। एतानि गन्धजनकाञ्जनानि न वस्तुतो भक्षणीयानि—तानि चाभ्यासदोषादश्यन्ते। वैदलो ह्यत्यन्तं पुष्टिकरं खाद्यम्, किन्तु नितरां दुष्पाच्यमेतत्। नवीनस्य कलाइ-विदलस्य वैदलोऽतीव सुपाच्यः सुस्वादश्च। प्यारिस-राजधान्या विख्यातं खाद्यं खल्वेष सूपः। नवीनस्य कलाइ-विदलस्य,यथेष्टं श्रपणं कृत्वा ततस्तस्य पेषणादनन्तरं जलेन मिश्रणं कर्तव्यम्। ततो दुग्धपावकतितउवदेकेनायससूत्रनिर्मितेन तितउना पवित्रीकरणात् त्वचो बहिरागमिष्यन्ति। अधुना हरिद्रा-धने-जिरे-मरिच-लङ्कादि यद् देयं तद् दत्त्वा तैलेन स्वल्पं भर्जनं कर्तव्यम्—उत्तमः सुस्वादः सुपाच्यो वैदलो जातः। यद्येकं छागमुण्डं मत्स्यमुण्डं वाऽनेन सह विद्यते तर्ह्युपादेयं तत् खाद्यम्।

यदेतत् प्रस्रावरोगस्य प्राचुर्यं देशे दृश्यते तत्र वाहुल्येन हेतुरतिसार एव, कियतांचन जनानां मस्तिष्कश्रमः, अन्येषां परिपाकाभावः। उदरसात्करणमेव किं भोजनमुच्यते। यावदेव परिपक्ष्यते तावदेव हि भोजनम्। तुन्दिलत्वं परि-पाकाभावस्य प्रथमं चिह्नम्। शुष्कीभाव उत पीनत्वमुभयमेतत् परिपाकाभावस्य फलम्। पदस्य मांसं लौहवद् दृढं स्यात्। प्रस्रावे शर्करा एल्बुमेन् वा दृष्ट-मिति न निराशेन भवितव्यम्। सर्वमेतदस्मद्देशस्य न किञ्चिदपि। न तत्र लेशतोऽपि चिन्ता कार्या। भोजनं प्रति सम्यग् दृष्टिः स्थापनीया यथाऽतिसारो न भवेत्। मुक्ते वायौ यावच्छक्यं स्थातव्यम्। अत्यर्थं पादचारणा कार्या, परिश्रमश्च करणीयः। यथा शक्नोषि तथाऽवसरो ग्रहीतव्यः, वदरिकाश्रमं प्रति तीर्थयात्रा कर्तव्या। हरिद्वारात् पदव्रजेन क्रोशानां शतमतिक्रम्य पर्वतमारुह्य वदरिकाश्रमगमनागमनं सकृच्चेत् क्रियेत तर्हि तवायं प्रस्रावरोगो दूरमपगमिष्यति। वैद्यादिकैर्नगम्यताम्। तेषां भूयांसः—'उपकारं न करिष्यामि, अपकारं तु कुर्मः, उच्यतां किं दास्यसी'ति। यथाशक्ति भेषजं मा ग्रहीः। रोगेण यदि षोडशांशो म्रियते तर्हि भेषजेन म्रियन्ते पञ्चदशांशाः। शक्नोषि चेत् प्रतिवर्षं पूजावकाशे[४४] पादचारेण स्वग्रामं गच्छ। धनोपजनश्चाऽलसराजस्वभाव-

प्राप्तिश्चेत्युभयं देशे समार्थकं जातम्। यो धृत्वा चाल्यते भोज्यते च स जनो जीवन्नेव रोगी, स तु वराकः। यश्च लुचिनामकस्य खाद्यस्य शूनं भागं छित्त्वा खादति स तु मृत एव। यस्त्वनारतं दश क्रोशान् चलितुं न पारयति किं स जनो मनुष्यः, अथवा भू-जन्तुः? स्वयमाहूय रोगमकालमृत्युं च यदि कोऽप्यानयेत्तदा कः किं कुर्यात्?

पुनर्योऽयमपूपः स खलु विषमेव, न कदाप्यसौ स्प्रष्टव्यः। खाम्बीरमिश्रणेन श्वेतमिदं गोधूमचूर्णमेकस्या दशाया अपरां दशां लभते। न किमपि खाम्वीर-मिश्रितं द्रव्यं भोक्तव्यमित्येतस्मिन् विषयेऽस्माकं शास्त्रे यः खाम्वीरमिश्रद्रव्यस्य निषेधो वर्तते तन् नितान्तं सत्यम्। यत् किमपि वस्तु मिष्टस्वरूपादम्लीभूतं तस्य शास्त्रीयं नाम शुक्तम्, दधिवर्जमेतस्य सर्वस्य भक्षणं निषिद्धम्। दधि खल्वतीवोपादेयम्, उत्तमं वस्तु। यद्येकान्ततोऽपूपो भक्षणीयस्तदा स पुनरग्नौ प्रताप्य भोक्तव्यः।

अशुद्धं जलं तथाशुद्धं भोजनं रोगस्य कारणम्। आमेरिकायामधुना जलशुद्धेः सुमहानाडम्वरः। यदेतन्निस्यन्दनं क्रियते तस्य दिनान्यपगतानि, यतो निस्यन्दनप्र-क्रिया (फिल्टर) जलं पुनातीत्येव किन्तु रोगबीजस्वरूपा ये कीटाणवस्ते विद्यन्त एव, विसूचिका-महामारीरोगयोर्वीजानि तदवस्थान्येव सन्ति, प्रत्युत शोधकसाधनं स्वयमेव तेषां वीजानां जन्मभूमिस्वरूपेण परिणमते। कलिकातायां यदा प्राथम्येन निस्यन्दनशोधितं जलं प्रवर्तितं तदा वर्षपञ्चकं विसूचिका न प्रादुरभूदिति श्रूयते। अनन्तरं तु यथापूर्वमेव जातम्। अस्यार्थः—तदेव निस्यन्दनसाधनं स्वयमेव विसूचिका-वीजस्यावासत्वेन परिणतम्। निस्यन्दनप्रक्रियासु श्रेष्ठः खलु ग्रामीणः प्रकारो यत्र संलग्नकाष्ठत्रयोपरि क्रमेण घटत्रयं स्थाप्यते, परन्तु द्वित्रेभ्यो दिवसेभ्योऽनन्तरं सिकता अङ्गारा वा परिवर्तनीया दाह्या वा। यत् पुनः कतकरजसो जले निमज्जनं गङ्गातीरस्थग्रामस्याभ्यासः स सर्वोत्तमः। कतकचूर्णानि यथासम्भवं मृत्तिकां मलं रोगवीजं च सह नीत्वाऽधो गच्छन्ति। गङ्गाजलमुदञ्चने पूरयित्वा कियता कतकचूर्णेन प्रसाद्य यदस्माभिर्व्यवह्रियते तत्तव इउरोपीयनिस्यन्दनादिप्रक्रिया-समूहं नितरामवजानाति, नलप्रस्नुतजलमप्यवधीरयति सुतराम्। तदवश्यं जलस्य श्रपणे कृते भयं नास्ति। कतकप्रसादितं जलं श्रपयित्वा शीतलीकृत्य व्यवहर, निस्यन्दनादिकं सर्वं दूरं निक्षिप्यताम्। अधुनाऽमेरिकायां विशालैर्यन्त्रैर्जलं कार्त्स्न्येन वाष्पीक्रियते, ततः पुनर्यन्त्रान्तरेण विशुद्धो वायुस्तदभ्यन्तरं प्रवेश्यते, स खलु वायुर्वाष्पीभूतस्य वायोः स्थाने। तज्जलमतीव विशुद्धम्, प्रतिगृहं तदेवा-धुना दृश्यते।

यस्यास्मद्देशीयस्य कियद्धनं विद्यते स नित्यं स्वशिशून् कचुरि-मण्डा-मेठाइ-

प्रभृतीनि खाद्यानि खादयति !! भक्तस्य गोधूमपिष्टकस्य च भक्षणमवमानः !! एतेन बाला दुर्बलाः स्थूलोदरा यथार्थपशवो भविष्यन्तीति किमाश्चर्यम् ? एतावती महती प्रबला जातिः इंरेजः, एते भृष्टान्नस्य मिष्टान्नस्य च नामश्रवणेनैव बिभ्यति, ते पुनस्तुषारावृते देशे वसन्ति, दिवारात्रं च श्राम्यन्ति ! अस्माकं वासो ह्यग्नि-कुण्डे, एकस्मात् कक्षात् कक्षान्तरं गमनं नास्माभिरभिलष्यते, आहारश्च लुचि-कचुरि-मिष्टान्नम्—घृतभृष्टं तैलभृष्टं च !! तदानीन्तनो ग्रामीणो भूस्वामी वचनमात्रेण दश क्रोशान् पद्भ्यां समचलत्, कइ-मत्स्यानां द्वे विंशती सकण्टकं चर्वयित्वा निःशेषयन्नासीत्, जीवितवांश्च शतं वर्षाणि। तेषां पुत्रादयः कलि-कातामागच्छन्ति, लुचि-कचुरि-प्रभृतीनि खादन्ति, अहर्निशं शकटमारोहन्ति, म्रियन्ते च प्रस्रावव्याधिना, कलिकातावासित्वस्य ह्येतत् फलम्। सर्वनाशश्च साधितः पुनर्दग्धैर्भिषग्भिर्वैद्यैश्च। ते हि सर्वज्ञाः, भेषजेन ते सर्वं साधयितुं पारयन्ति। स्वल्पोऽप्युदरधर्मो जात इति तत्क्षणादेव स्वल्पं भेषजं दीयताम्। दग्धो वैद्योऽपि न वदति यदास्तां तावदौषधम्, गम्यताम्, क्रोशद्वयं पादचारणा कार्येति। बहवो देशा दृश्यन्ते, बहुविधं भोजनमपि दृश्यते। तदस्माकं भक्तवैदल-सूप-प्रकीर्णकातिक्त-रम्भापुष्पव्यञ्जनादीनां कृते पुनर्जन्मग्रहणमपि न तथाति-रञ्जनमिव भाति। सत्सु दन्तेषु न यूयं दन्तानां बहुमानं कुरुथेत्ययमनुतापः। भोजनस्यानुकरणं किम् इंरेजसकाशात् कर्तव्यम्—तादृशं धनं कुत्र ? अधुनास्म-द्देशस्योपयोगि यथार्थं वङ्गीयं भोजनमुपादेयं पुष्टिकरमल्पार्घं च यत्तद् वङ्गानां पूर्वभागेऽस्ति, तेषामनुकरणं यावच्छक्यं कर्तव्यम्। यावत् पश्चिमदेशं प्रति प्रावण्यं भविष्यति तावदेवाशुभम्, शेषश्च माषवैदलो मत्स्याम्लमात्रं च—अर्ध-साँओतालं वीरभूमे बाँकुडायां च !! यूयं कलिकातावासिनः, सर्वनाशजनकेन श्वेतगोधूमचूर्णपिण्डकेन हस्ते मृत्तिकाघर्षणमनुकृत्य[४५] मोदकापणरूपं कूटमुन्मो-चितमापणिकैस्तस्यैव मोहनेन वीरभूम-बाँकुडानामकस्थानेषु मञ्जूषापरिमितं भृष्टतण्डुलं दामोदरे न्यस्तम्, माषवैदलो गतः पयःप्रणाल्याम्, घृष्टः खसतिलः प्राचीरे लिप्तः, ढाकाविक्रमपुरमपि ढाँइमत्स्यं कच्छपादिकं जले त्यक्त्वा सभ्यो[४६] भवति !! स्वयं भ्रष्टाः कृत्स्नं देशमपि तथा कुरुथ, ईदृशा यूयं सुसभ्या नगरवासिनः ! युष्माकं मुखे भस्म ! तेऽप्येतादृशा मूर्खा यत् कलिकातायाः वर्जितमलराशिं प्राश्योदरामयेण मृतप्राया भविष्यन्ति किन्तु न प्रकाशयि-ष्यन्ति यदेतानि न पच्यन्त इति, कथयिष्यन्ति यल्लवणसंसर्गो जात इति !! यथा कथमपि नागरा भविष्यन्ति !!

भोजनादिविषयकं सारमिदं श्रुतम्। अधुना पाश्चात्त्यैः किमश्यते कीदृशं वा परिवर्तनं क्रमशस्तेषामाहारस्य जातमित्यपि किञ्चिदुच्यते।

दरिद्रावस्थायां सर्वेषामेव देशानां खाद्यं धान्यविशेषः, शाकव्यञ्जनादि मत्स्य-मांसादिकं विलासरूपेणोपस्कररूपेण च व्यवह्रियते। यस्मिन् देशे यत् सस्यं प्रधानतयोत्पद्यते तदेव दरिद्राणां प्रधानं खाद्यम्, इतरद् वस्त्वानुषङ्गिकम्। यथा वङ्गेपूत्कलेषु माद्राज-मालावारप्रदेशयोः समुद्रतीरवर्तिन्यञ्चले भक्तं प्रधानं खाद्यम्, तेन सह विद्यते वैदलो व्यञ्जनं, कदाचिन् मत्स्यो मांसं चोपस्करवत्।

भारतवर्षस्येतरेषु सर्वेषु प्रदेशेषु धनिनां कृते गोधूमपिष्टकं भक्तं च, सामान्य-जनानां वजरा-मडुया-जनार-झिङ्गोरा-प्रभृतिभ्यो नानाविधेभ्यो धान्येभ्यः समुत्पन्नं पिष्टकं प्रधानं खाद्यम्।

शाको व्यञ्जनं वैदलो मत्स्यो मांसमिति सर्वेषामेव समग्रे भारतवर्षे तस्य पिष्टकस्य भक्तस्य वा सुस्वादार्थं व्यवह्रियते, तत एव तेषां व्यञ्जनमिति समा-ख्यानम्। पाञ्जाव-राजपुताना-दाक्षिणात्यदेशेषु येऽप्यामिषाशिनो धनिनः, किमुत राजानोऽपि, यद्यपि नित्यं नानाविधं मांसमदन्ति तथापि पिष्टकं भक्तं वा मुख्यमशनम्। यो जनः प्रतिदिनमर्धसेरपरिमितं मांसमश्नाति स खल्वेकसेर-परिमितं पिष्टकमपि तेन सह निश्चितमत्ति।

पाश्चात्त्ये ये तावद् दरिद्रदेशाः सन्ति तेषां तथा वित्तशालिदेशानां दरिद्र-जनानां तदेव पिष्टकं गोलालुश्च मुख्यं खाद्यम्। मांसस्योपस्करमात्रं केवलं कदाचिदेव। स्पेन-पोर्तुगाल-इतालिप्रभृतिषूष्णतरेषु देशेषु प्राचुर्येण द्राक्षाः समुत्-पद्यन्ते, द्राक्षा-मद्यं च स्वल्पार्घम्। तेषु मद्येषु मादकत्वं नास्ति (उदञ्चन-परिमितस्य सेवनं विना मादकत्वं नायाति, तावच्च न कोऽपि पातुं समर्थः),नितान्तं पौष्टिकं खाद्यं ह्येतत्। तद्देशीयदरिद्रा जना एतदर्थं मत्स्यमांसयोः स्थाने तेन द्राक्षारसेन पुष्टिं संगृह्णन्ति। परमुत्तराञ्चले यथा रुशिया-सुइडेन-नरओये-प्रभृतिषु देशेषु दरिद्रजनानामाहारः प्राधान्येन राइ-नामकधान्यस्य पिष्टकं, शुष्की-कृतस्य मत्स्यस्यैक उत द्वौ खण्डौ तथा गोलालुः।

इउरोपस्य वित्तशालिनां जनानाम् आमेरिकाया आवालवृद्धवनितानां भोजन-मन्यविधम्—अर्थात् पिष्टकभक्तादीन्युपस्करमात्रं मत्स्यो मांसं च प्रधानमशनम्। आमेरिकायां पिष्टकभक्षणं नास्तीव। मत्स्यो मत्स्य एव समागतस्तथा मांसं मांसमेवागच्छदास्ते, तच्च तथैव भक्षणीयं न तु भक्तपिष्टकादिसंयोगेन। एतदर्थ-मेकैकस्मिन् वारे भक्ष्याधारः परिवर्त्यते। यदि दश भक्ष्याणि सन्ति तर्हि वार-दशकमेव पात्रपरिवर्तनं क्रियते। तथा च चिन्त्यताम्—अस्मद्देशे प्रथमतः केवल-मातिक्तमागतं ततो भोजनपात्रं परिवर्त्य वैदलमात्रमागतम्, पुनः पात्रपरिवर्तनेन केवलं सूपः समागतः, पुनः पात्रपरिवृत्त्या कियद् भक्तमथवा लुचिद्वयमित्यादि। तस्यायं लाभो यद् बहुविधं द्रव्यं स्वल्पमश्यते, उदरे भारपीडा न भवति।

फरासीपद्धतिः—प्रातः 'कफि', नवनीतमिश्रितस्यापूपस्यैकः खण्ड उत तदर्धम्, मध्याह्ने मत्स्यमांसादिना मध्यमं भोजनं रात्रौ तु प्रलम्बितम्। इतालि-स्पेनप्रभृतीनां जातीनां तथैव ; जार्मानदेशीयो यदा तदा भुङ्क्ते—वारपञ्चकं वारषट्कं वा, सर्वेषु पर्यायेषु न्यूनाधिकरूपेण मांसम्। इंरेजा वारत्रयम्—प्रातः स्वल्पं किन्तु मध्ये मध्ये चा-कफि-संयोगोऽस्ति। आमेरिकावासिनो वार-त्रयम्—उत्तमं भोजनं मांसप्रचुरम्।

परमेतेषु सर्वेषु देशेष्वेव नैशं भोजनम् (डिनर्) एव मुख्यं खाद्यम्—धनी चेद् भवति तर्हि तस्य फरासीदेशीयः पाचकः, पद्धतिरपि फरासीदेशीया। आदौ स्वल्पो लवणाक्तो मत्स्यो मत्स्यडिम्बो वा कोऽप्युपस्करो वा शाको वा। क्षुधा-वृद्ध्यर्थमिदम्। ततः सूपस्ततोऽप्यतनी पद्धतिरेकं फलम्, ततो मत्स्यस्ततश्च मांसव्यञ्जनमेकमनन्तरं च शूल्यं मांसमपक्वशाकसहितम्, अनन्तरमारण्यमृग-पक्ष्यादीनां मांसम्, ततो मिष्टान्नमवसानं च दुग्धशर्करामिश्रितस्तुषारसारः (कुलपि)—'मधुरेण समापयेत्'[४७]। धनी चेत्तर्हि पात्रपरिवर्तनेन सह मद्यपरिवर्तनमपि संघटते—शेरि, क्ल्यारेट्, श्यामपाँ इत्यादि, मध्ये मध्ये च स्वल्पो मद्यमिश्रस्तुषार-सारः। पात्रपरिवर्तनेन साकं कण्टकचमसाः सर्वे परिवर्तन्ते, आहारान्ते कफि दुग्धरहितम्, आसवमद्यं क्षुद्रेषु पानपात्रेषु, धूमपानं च। भोजनवैचित्र्येण सह मद्यवैचित्र्यं चेद् दर्शयितुं शक्यं तर्हि 'धनवत्समुदाचारः' इति कथ्यते। एकस्मिन्नेव भोजन अस्मद्देशीयः कश्चन मध्यवित्तः सर्वस्वान्तो भवितुं शक्नोति, एतादृशो हि तेषां भोजनाडम्बरः।

आर्यैरेकस्मिन् पीठे ह्युपविष्टमेकस्मिन् पीठे च तिर्यग्लम्बनं कृतं, स्नानार्थं व्यवहृते स्वल्पोच्चे चासने भोजनपात्रं संस्थाप्य तस्मिन्नेकस्मिन्नेव पात्रे कृत्स्नं भोजनं भुक्तमासीत्। सा पद्धतिरधुनापि पाञ्जाव-राजपुताना-महाराष्ट्र-गुर्जर-देशेषु विद्यमाना। वङ्गीयोत्कल-तैलेङ्गि-मालावारिप्रभृतयो भूमावेव भुञ्जते। महीशूरमहाराजोऽपि भूमौ युग्मपत्रे भक्तवैदलं भुङ्क्ते। मुसलमाना वस्त्रमास्तीर्य प्राश्नन्ति। वर्मि-जापानीप्रभृतयः शरीरं पुरतोऽवनम्य भूमावुपविश्य मृदि पात्रं संस्थाप्य खादन्ति। चीनदेशीयाः काष्ठमञ्चे भुञ्जते, आसन्द्यामुपविश्य क्षुद्र-यष्ट्या चमसेन च प्रत्यवस्यन्ति। रोमीया ग्रीकाश्चासन्द्यां शयित्वा काष्ठमञ्चे हस्तं प्रसार्य भोजनमकार्षुः। इउरोपीया आसन्द्यामुपविश्य काष्ठमञ्चात् पाणिना प्राग् भुञ्जाना आसन्, अधुना नानाविधकण्टकचमसा दृश्यन्ते।

चैनिकं भोजनं नूनं दुरूहं निपुणं च कृत्यम्, यथा चास्मदीया ताम्बूलविक्रेत्री कृशेन लौहफलकद्वयेन हस्तकौशलात् कर्तरीकार्यं साधयति तथा चैनिका दक्षिण-हस्तस्याङ्गुलिद्वयस्य मुष्टेश्च कौशलेन सन्दंशवद् धृतेन क्षुद्रयष्टिद्वयेन शाकादिकं

मुखे समुत्तोलयन्ति। पुनर्द्वयमेतत् संयुज्य पात्रपूर्णं भक्तं मुखसन्निधानं समानीय तया यष्टिद्वयनिर्मितया क्षेपण्या प्रणुद्य मुखान्तः प्रवेशयन्ति।

सर्वासां जातीनामेवादिमः पुरुषः प्रथमावस्थायां यदेव प्रापत्तदेव च समखादीदिति श्रूयते। पशुमेकं निहत्य मासं व्याप्य भक्षयन्नासीत्, पूतीभवनेऽपि न तस्य परित्यागमकार्षीत्। क्रमेण ते सभ्या जाताः, कृपिकर्म शिक्षितवन्तः, आरण्यपशव इव कस्मिंश्चिद्दिवसे प्रभूतं भोजनं पुनः कतिचिद् दिनानि भोजनाभावः—सेयं समवस्था गता, नित्यं भोजनं लभ्यमभवत् किन्तु पूतीभूत-द्रव्य-भोजनस्य रीतिः काचन संस्थिता। पूतीभूतं दुर्गन्धि यत् किमपि भोज्यमावश्यकमित्यस्माज्जातो नैमित्तिक आदृतश्चोपस्करः।

एस्कुइमो-जातिस्तुषाराभ्यन्तरे वसति। तत्र सस्यकणमपि न जायते। मत्स्यो मांसं च नित्यं भोजनम्। गतेषु कियत्सु दिनेषु यदाऽरुचिरनुभूयते तदा पूतिभूतस्य मांसस्य खण्डमेकं खादति, अरुचिश्चापगच्छति।

इउरोपीया अधुनापि वन्यपशुपक्षिणां मांसमपूतीभूतं नाश्नन्ति। लब्धमपि नवीनं मांसं प्रलम्बीकृत्य स्थापयन्ति यावन्न पूतीभूय दुर्गन्धि जायते। कलिकातायां हरिणस्य पूतीभूतं मांसमापणे प्रसारितमात्रं विक्रीतं भवति, विगलितस्य भेट्किमत्स्यस्योपादेयता प्रसिद्धा। इंरेजानां किलाटो यावदेव पूतीभविष्यति, यावन्तश्च कीटा इतस्ततो भ्रमिष्यन्ति तावदेव ह्युपादेयोऽसौ। पलायमानमपि किलाटकीटं द्रुतमनुसृत्य धृत्वा मुखान्तः प्रवेशयिष्यन्ति—श्रूयते तद्धि नितरां स्वादिष्ठम्!! निरामिषाशिनः सन्तोऽपि पलाण्डु-लशुनार्थं रसनाकण्डूयनमनुभविष्यन्ति, दाक्षिणात्यब्राह्मणस्य पलाण्डुलशुनं विना भोजनमेव न भविष्यति। शास्त्रकारास्तमपि मार्गं निरुद्धवन्तः। पलाण्डु-लशुन-ग्रामीणशूकर-ग्राम्यकुक्कुटाशनं पापविशेषः[४८], तदर्थं दण्डो जातिनाशः। ये खल्वेतां कथां श्रुतवन्तस्ते पलाण्डुलशुनं परित्यक्तवन्तः किन्तु ततोऽप्यधिकं दुर्गन्धि हिंगु भोक्तुमारेभिरे! पर्वतीयः शास्त्रानुसारी हिन्दुर्लशुनतृणं पलाण्डुलशुनयोः स्थाने भोक्तुं प्रारब्धवान्। एतद्द्वयस्य निषेधो न हि ग्रन्थे विद्यते!!

सर्वेषु धर्मेषु भोजनादिकस्य कश्चन विधिर्निषेधश्च वर्तते, नास्ति केवलं खृष्टानधर्मे। जैनेन बौद्धेन च मत्स्यो मांसं च न कदापि भोक्ष्यते। जैनः पुनर्यत् मृत्तिकाया अधो जायते यथा गोलालुमूलादिकं तदपि नाशिष्यति। खनने कृते कीटो मरिष्यति, रात्रौ न भोक्ष्यते यदि तमसि कीटमश्नुयात्।

याहुदिधर्मीया यस्मिन् मत्स्ये शल्का न सन्ति तादृशं न खादिष्यन्ति, शूकरं न खादिष्यन्ति, यः पशुर्न द्विशफो यश्च न रोमन्थायते तमपि नाभ्यवहरिष्यन्ति। पुनरेषा विचित्रा च कथा यद् दुग्धं दुग्धोत्पन्नं वा किमपि वस्तु यदि

मत्स्यमांसपाककाले पाकशालां प्रविशेत्तदा तत् सर्वं निक्षेप्तव्यम्। अतो धर्मप्राणो याहुदि-धर्मीयोऽन्यस्या जातेः पक्वमन्नं नाश्नाति। पुनर्हिन्दुवद् याहुदिधर्मीया वृथामांसं न भुञ्जते[१९]। यथा वङ्गप्रदेशे पाञ्जावप्रदेशे च मांसस्य नाम 'महाप्रसादः'। याहुदिधर्मीयास्तादृशं महाप्रसादमर्थाद् यथाशास्त्रं बलिदानं विना मांसं नादन्ति। अत एव हिन्दुवद् याहुदीनामपि यस्मात् कस्मादप्यापणाद् मांसक्रयणस्याधिकारो नास्ति। मुसलमाना याहुदीनां बह्वी रीतीरनुसरन्ति परन्तु तथाऽधिक्यं नाश्रयन्ति, दुग्ध-मत्स्य-मांसानि न सहाश्नन्तीत्येव, न खलु तेषां परस्परं स्पर्शमात्रेण सर्वनाशो मन्यते। याहुदीनां हिन्दूनां चानेकं सौसादृश्यं विद्यते—भोजनमधिकृत्य, परन्तु याहुदिधर्मीया वन्यं शूकरमपि नाश्नन्ति, हिन्दवः खादन्ति। पाञ्जावप्रदेशे हिन्दूनां मुसलमानानां च मिथस्तुमुलः संघातो विद्यमान इति वन्यः शूकरो हिन्दूनामवश्यखाद्यत्वेन परिणतः। राजपुतजनानां मध्ये वन्यशूकरहिंसया भोजनं धर्मविशेषः। दक्षिणदेशे ब्राह्मणं विहायान्यवर्णानां मध्ये ग्राम्यशूकरोऽपि यथेष्टं चलति। हिन्दवो वन्यकुक्कुट-मदन्ति, ग्राम्यं तु न। वङ्गप्रदेशाद् नेपालपर्यन्तमाकाश्मीरहिमालयमेकया पद्धत्या चलति। मनूक्ता सामाजिकी रीतिरेतस्मिन्नञ्चलेऽद्यापि समधिकं विद्यमाना।

किन्तु कुमायुनादारभ्य काश्मीरपर्यन्ते स्थाने वङ्गीय-विहारप्रदेशीय-प्रयाग-वासि-नेपालवासिभ्योऽपि मनोरनुशासनस्य विशेषः प्रचारः। यथा वङ्गीयः कुक्कुटं कुक्कुटाण्डं च नात्ति किन्तु हंसाण्डं खादति तथा नेपालीयोऽपि, किन्तु कुमायुनान्न तदपि प्रचलति। काश्मीरवासिनो वन्यहंसस्याण्डे प्राप्ते सुखिनो भवन्ति, न तु ग्राम्ये।

प्रयागादनन्तरस्थानादारभ्य हिमालयवर्जं भारतवर्षस्यान्येषु सर्वेषु प्रदेशेषु यश्छागमत्ति स कुक्कुटमपि।

एतेषु विधिनिषेधेषु यद् भूयानेव भागः स्वास्थ्यस्य कृते तत्र सन्देहो नास्ति। परं सर्वत्र न समानं कर्तुं शक्यते। शूकरकुक्कुटौ यत् किमपि भक्षयतो नितराम-परिष्कृतौ च तौ पशू इति निषेधः। वन्यः पशुः किमत्तीति केन दृश्यत इत्युच्य-ताम्। तदतीत्य रोगः—वन्यपशूनां स्वल्पः।

दुग्धम्—अम्लाधिक्यं चेदुदरे जातं तर्हि सर्वथा दुष्पाच्यम्, कदाचिदेकेन श्वासेन पात्रपरिमितस्य दुग्धस्य पानात् तत्फलेन सद्योमृत्युः संघटितः। यथा शिशुर्मातृस्तन्यं पिबति तथा स्वल्पश उपस्पर्शने कृते शीघ्रं परिपाको भवति, अन्यथा भूयान् विलम्बो जायते। दुग्धं हि गुरुपाकं द्रव्यम्, मांसेन सह च भूरितरं गुरु-पाकम्, अत एवायं निषेधो याहुदीनां मध्ये। मन्दमतिर्माता नवजातं शिशुं बलाद्

द्रुतं दुग्धं पाययति, मासषट्काभ्यन्तरे च मस्तके हस्तं दत्त्वा रोदिति !! अत्रत्याश्चिकित्सकाः पूर्णवयसोऽपि जनान् निर्दिशन्ति यत् सेरपादपरिमितस्य दुग्धस्य पानं शनैः शनैः कर्तव्यम्। सद्योजातानां कृते 'पायनपात्रम्' व्यतीत्योपायान्तरं नास्ति। माता कर्मव्यग्रा—दासी च शुक्तिपुटसदृशेन धातुपात्रेण प्रसह्य धृतं शिशुं द्रुतं दुग्धं पाययति !! लाभस्तस्यैतदेव यत्ते रुग्णाः शिशवो न तथा वर्धन्ते, ते हि तत्रैव जीवनस्यान्तिमं दुग्धपानं कुर्वन्ति। ये चैतेषां दारुणदुग्धपानमतीत्य कथमपि जीवन्ति ते प्रायशः स्वस्था बलिष्ठाश्च।

तदानीन्तनात् प्रसूतिकक्षाद् दुग्धपानादिभ्यश्च ये शिशवो जीवितवन्तस्ते प्रायशः स्वस्थाः सबलाश्चाजीवनं समवर्तन्त ! मातुः षष्ठ्याः साक्षाद् वरपुत्रश्चेन्न भवेत्तर्हि किं तस्मिन् काले कोऽपि शिशुर्जीवितुं प्रभवेत् !! तादृशं तापप्रतपनं रेखाङ्कनवेधादिकं चेत्येतेभ्यो जीवनलाभः खलु प्रसूतिप्रसूतयोरुभयोरेव दुःसाध्यमासीत्। तुलसीतले हरिप्रसादं लब्धः शिशुर्माता चोभौ यज्जीवितौ तत् साक्षाद् यमदूतसदृशस्य चिकित्सकस्य हस्तात् परित्राणमासीदिति कृत्वा।

## वेषभूषम्

सर्वेष्वेव देशेषु कियती नाम शिष्टता वस्त्रेषु संसक्ता दृश्यते। 'अज्ञाते वेतने शिष्टोऽशिष्टो वेति कथं ज्ञास्यामि ?'[५०] न केवलं वेतनमपि तु 'अदृष्टे वस्त्रे शिष्टोऽशिष्टो वेति कथं ज्ञास्यामि' इत्येषा रीतिः, स्वल्पतया भवतु नाम, तथापि सर्वेषु देशेषु विद्यत एव। अस्माकं प्रदेशे न कोऽप्यनावृतशरीरेण पथि बहिर्गन्तुं समर्थः, भारतस्यान्येषु प्रदेशेषु पुनरुष्णीषं शिरस्यनास्थाप्य न कोऽपि पथि गच्छति। पाश्चात्ये फरासीदेशीयश्चिरं सर्वेषु विषयेष्वग्रणीः—तेषां भोजनं तेषां वेषः सर्वैरनुक्रियते। अधुनापि इउरोपस्य विविधेषु देशेषु तत्तद्विशेषवेषो विद्यमानः किन्तु सति शिष्टे जाते च धने क्षणादेव स वेषोऽन्तर्हितो भवति, फरासीवेषश्चाविर्भवति। काबुलदेशीयपदनिचोलपरिहित ओलन्दाजः कृषकः, कञ्चुकपरिहितो ग्रीकः, तिब्बतीयवेषपरिहितो रुशो यदा शिष्टो भवति तदैव फरासीदेशीयेन प्रावारकेण जंघावस्त्रेण चावृतो भवति। अङ्गनानां तु वार्तैव नास्ति, सत्येव धनोपजने ताभिः पारि-राजधान्या वसनं परिधातव्यमेव। आमेरिका, इंलण्ड्, फ्रान्स्, जार्मानि इत्येता धनवत्यो जातयः, तेषु देशेषु सर्वेषामेव सदृशो वेषः—तदेव फरासीदेशस्यानुकरणम्। तदद्य पारि-नगरीमपेक्ष्य लण्डने पुरुषाणां वेषो भव्यतरः, अतः पुरुषाणां वेषो लण्डनकृतः स्त्रीणां च पारिनगर्या अनुकरणम्। येषां तु

अनाधिक्यं तैस्तस्मिन् स्थानद्वये निर्मितो वेषो वर्षस्य द्वादश मासानेव व्यवह्रियते। आमेरिका विदेशागतवेषे प्रभूतं करं संस्थापयति, दत्त्वापि तादृशं करं पारि-लण्डनयोर्वेषः परिधानीयः। कृत्यमेतद् आमेरिकावासिन एव कुर्युः—आमेरिका ह्यधुना कुवेरस्य प्रधाना वसतिः।

प्राचीना आर्या वस्त्रमुत्तरीयं च परिहितवन्तः, क्षत्रियाणां दृढसन्नद्धं जङ्घावस्त्रं प्रलम्वः कञ्चुकः—युद्धकाले। अन्यस्मिन् समये सर्वेषामेव वस्त्रोत्तरीयम्। परमुष्णीषमासीत्। अतिप्राचीने काले भारतवर्षे स्त्रीपुंसावुष्णीषं दधतावास्ताम्। यथाऽधुना वङ्गप्रदेशं विहायान्येषु प्रदेशेषु कौपीनमात्रे सत्येव शरीरावरणं जातं परमुष्णीषमावश्यकं तथा प्राचीनकालेऽप्यासीत् स्त्रीपुंसयोः। बौद्धकालीना या भास्कर्यमूर्तयो लभ्यन्ते तासु स्त्रीपुंसावुभौ कौपीनपरिहितौ। बुद्धदेवस्य जनकः खलु कौपीनपरिहितः सन् सिंहासनमुपविष्टः, जनन्यपि तद्वदुपविष्टा—अधिको भागो हि पदपूर्णा मञ्जरी, हस्तपूर्णं च कङ्कणम्, परमुष्णीषं विद्यते!! सम्राड् धर्माशोको वस्त्रं परिधाय, उत्तरीयं स्कन्धे निक्षिप्य, अनावृतशरीरो डमरुसदृशे चासने समुपविश्य नृत्यं पश्यति! नर्तक्यः सर्वथा नग्नाः, कटिदेशात् कतिचिद् वस्त्रखण्डाः प्रलम्बमानाः। सारमेतद् यदुष्णीषं विद्यते। सज्जा कृत्स्ना[५१] खलूष्णीषे। तद् राजपुरुषा दृढसन्नद्धजङ्घावस्त्रमादधानाः प्रलम्वप्रावारक-परिहिताः—सन्नद्धजङ्घावस्त्रं चोगा च। सारथिर्नलराज एवं हि रथं समचालयद् यद् राज्ञ ऋतुपर्णस्योत्तरीयं कुत्र पतितमवर्तत, ऋतुपर्णो नृपतिरनावृत एवोद्वाहार्थं प्रतस्थे। वस्त्रोत्तरीयं चार्याणां चिरन्तनो वेषः, अत एव क्रियाकर्मार्थं वस्त्रोत्तरीय-धारणमावश्यकम्।

प्राचीनग्रीकरोमीयाणां वेषो हि वस्त्रोत्तरीयमासीत्, एको महान् वस्त्रखण्ड-स्तयोत्तरीयमेकम्—'तोगा' इति नाम, तस्यापभ्रंशः 'चोगा'। परं कदाचिदेकः शिथिलप्रावारकोऽपि परिहित आसीत्। युद्धकाले सन्नद्धजङ्घावस्त्रं प्रावारकश्च। स्त्रीणामेको महान् प्रलम्व आयतश्च चतुष्कोणः प्रावारकः। स चेत्थम्—शय्यास्तरणद्वयं प्रलम्बतः परिस्यूतमायत्या तून्मुक्तम्। तस्यान्तः प्रविश्य कटि-देशे वारद्वयं वन्धनं क्रियते—सकृद् वक्षसोऽधः, सकृच्चोदरस्याधः। अनन्तरमुपरि विद्यमानस्योन्मुक्तवस्त्रभागद्वयस्य हस्तद्वयोपरि स्थानद्वये समुत्तोलनं कृत्वा पीनया सूचिकया सीव्यति यथोत्तरभारते पर्वतीयाः कम्वलं परिदधति। सोऽयं वेषोऽति-सुन्दरः सरलश्च। उपरि चैकमुत्तरीयम्।

कृत्तं वस्त्रं प्राचीनकालात् केवलम् इरानदेशीयैः परिहितमासीत्। मन्ये चैनिकसकाशात् तैः शिक्षितम्। चैनिकाः खलु सभ्यताया भोगविलासात्मकस्य सुखस्वाच्छन्दयस्य वा प्राथमिको गुरुः। अनादिकालादेव चीनदेशे भोजनं

काष्ठमञ्चे, आसन्द्यामुपविश्य भोजनस्य कत्येव साधनानि तेषाम्, कृत्तं वस्त्रं च बहुविधम्, सन्नद्धजङ्घावस्त्रं प्रावारकः शिरोभूषणं च परिधानम्।

सिकन्दर शाह इरानदेशं जित्वा वस्त्रोत्तरीयं परित्यज्य सन्नद्धजङ्घावस्त्र-परिधानायोद्युक्तः। तेन तस्य स्वदेशीयाः सैनिकास्तथा क्रुद्धा येन विद्रोहः सञ्जातप्रायः। सारमेतद् यत् सिकन्दरो नितान्तं निर्बन्धवान् पुरुषः—सन्नद्ध-जङ्घावस्त्रं प्रावारकं च प्रावर्तत।

उष्णे देशे वस्त्रेण न प्रयोजनम्। कौपीनमात्रेण लज्जा निवार्यते, शिष्टः केवलमलङ्कारः। शीतले देशे शीतप्रकोपात् सर्वे पीडिताः, असंस्कृतावस्थायां पशोश्चर्माकृष्य परिदधति, क्रमेण कम्वलं दधते, क्रमशः प्रावारकः पादप्रावारक इत्यादि वैविध्यं जायते। ततोऽनावृते शरीरे चेदलङ्कारः परिधीयते तर्हि शैत्येन मृत्युः, अतोऽलङ्कारप्रियत्वं वस्त्रोपरि समापतति। यथाऽस्मद्देशेऽलङ्कारस्य भूषा परिवर्तते तथैतेषामपि देशे प्रतिक्षणं वस्त्रभूषा परिवृत्तिं लभते।

शीतलेषु देशेष्वतः सर्वदा कृत्स्नमङ्गमनावृत्य न कस्यापि पुरतो वहिर्गमनं शक्यम्। इउरोपे यथार्हं वेषमपरिधाय गृहाद् वहिर्न गन्तुं शक्यते। पाश्चात्त्येषु देशेष्वङ्गनानां पदप्रदर्शनमतीव लज्जाकरं किन्तु ग्रीवा वक्षसश्च कियान् भागो दर्शयितुं शक्यः। अस्मद्देशे मुखप्रदर्शनं सातिशयं लज्जाकरं किन्त्ववगुण्ठनाकर्षणा-तिशय्येण शाटी कटिदेशं यावदुत्तिष्ठेदपि न दोषः। राजपुतनायां हिमाचले चाष्ठावङ्गानि समावृत्योदरस्याधोभागः सन्दर्श्यते।

पाश्चात्त्यदेशानां नर्तक्यस्तथा वारवनिता लोकानां प्रलोभनार्थमनाच्छा-दिताः। एतासां नृत्यस्यार्थः सङ्गीततालेन शरीरमनावृत्य प्रदर्शनम्। अस्माकं देशेऽनावृतं शरीरं शिष्टानां योषिताम्, नर्तकी वेश्या कार्त्स्न्येनावृता। पाश्चात्त्ये स्त्रियः सदैवावृतशरीराः, शरीरस्यानाच्छादने खल्वाकर्षणं वर्धते। अस्माकं देशे दिवारात्रमनावृतशरीरं, वेषं परिधायावृत्यावस्थाने समधिकमाकर्षणं जायते। मालावारप्रदेशे स्त्रीपुंसयोः कौपीनोपरि केवलं वहिर्वासः, न किमप्यन्यद् विद्यते। वङ्गीयानामपि तथा, परं पुरुषाणां पुरतो योषितः स्वाङ्गानि कथमपि समाच्छाद्य निगूहन्ति।

पाश्चात्त्यदेशे पुरुषः पुरुषस्य पुरो निर्वितर्कं सर्वाण्यङ्गान्यनावृत्य नग्नो भवति —यथास्मद्देशे स्त्रियः कुर्वन्ति। पितापुत्रौ सर्वाण्यङ्गानि नग्नीकृत्य सह स्नातः, नास्ति दोषः। किन्तु स्त्रीणां सविधे, पथि चान्यत्र वा, स्वगृहं विहाय सर्वत्र—कृत्स्नो देह आवरणीयः।

केवलं चीनदेशं व्यतीत्य सर्वेषु देशेष्वेव लज्जामाश्रित्य प्रभूतमद्भुतं तत्त्व-मालोकितम्—कस्मिन्नपि विषये लज्जाधिक्यं पुनरन्यस्मिन् भूरितरे लज्जाकरे

विषये न लज्जालेशः। चीनदेशे स्त्रीपुंसौ सर्वदाऽपादमस्तकं समावृतौ। चैनिकः कनफुछस्य शिष्यो वुद्धस्य चेति हेतोर्नितरां नीतिसिद्धः, अशोभनं वचनं व्यवहारश्चलनं चेत्तर्हि तत्क्षणादेव दण्डः। खृष्टीयो धर्मप्रचारकस्तत्र गत्वा चीनभाषायां वाइव्ल्ग्रन्थं मुद्रापयामास। तद् वाइव्ल्रूपं पुराणं हिन्दूनां पुराणानां चतुर्दश पुरुषाः—देवमनुष्ययोर्विचित्रं कलङ्कमधीत्य चैनिकस्तु क्रोधान्धो जातः। उक्तं च—"नायं ग्रन्थः कथमप्येतस्मिन् देशे प्रवर्तनीयः, ग्रन्थोऽयमतीवाश्लीलः।" तदुपरि धर्मयाजिका खलून्मुक्तवक्षसं सान्ध्यवेषं परिधाय यवनिकातो वहिर्निष्क्रम्य चैनिकान् निमन्त्रयामास। स्थूलवुद्धिश्चैनिकोऽब्रवीत्—'सर्वनाशः, असमीचीनमेतं ग्रन्थं पाठयित्वा, भ्रष्टानां स्त्रीणां चानावृतं शरीरं प्रदर्श्यास्माकं युवकान् भ्रंशयितु धर्मोऽयं समागतः। इदमेव हि चैनिकानां खृष्टानोपरि महाक्रोधकारणम्। अन्यथा चैनिका न कदापि कञ्चन धर्ममाघ्नन्ति। श्रुतं यदधुना धर्मयाजकैरश्लीलांशं परित्यज्य वाइव्ल्ग्रन्थो मुद्रापितः किन्तु चैनिकस्तत्राधिकतरं सन्दिहानः।

पुनरेतस्मिन् पाश्चात्यदेशे देशविशेषेण लज्जाया घृणायाश्च तारतम्यं विद्यते। इंरेजानामामेरिकावासिनां च लज्जादिकं समानम्, फरासीनां चान्यविधम्, जार्मानदेशीयानां च पुनरन्यविधम्। रुशीयतिव्वतीयौ च वाहुल्येन सदृशौ, तुरस्कस्य तु पृथगित्यादि।

## रीतिर्नीतिश्च

अस्मद्देशापेक्षया इउरोपे आमेरिकायां च मलमूत्रविसर्गेऽधिकतरं लज्जा विद्यते। वयं हि निरामिषाशिनः—प्रभूतं शाकपत्रादिकं चास्माकमाहारः। पुनरतिग्रीष्मोऽयं देशः, एकस्मिन्नेव श्वासे घटपूर्णं जलं पेयम्। पश्चिमप्रान्तीयः कृषकः सेरपरिमितं सक्तुं पिवति, ततश्च जलपानस्य प्राचुर्यात् पूर्णं कूपमपि निःशेषयति। ग्रीष्मकाले वयं लोकान् जलं पाययितुं वंशखण्डं वहिर्निर्गमयामः। अतएवोच्यतां कुत्रैतत् सर्वं गमिष्यति? देशोऽयं कथं न विष्ठामूत्रमयो भविष्यति? गोशाला, अश्वमन्दुरा, व्याघ्रसिंहपिञ्जरं च तुलनीयं नाम!

शुनश्छागस्य च तुलना कार्या! पाश्चात्यदेशानामाहारो मांसप्रचुर इति स्वल्पः, शीतले च देशे जलपानं नास्तीवेति वक्तव्यम्। शिष्टा जनाः क्षुद्रेषु पानपात्रेषु किञ्चिद् मद्यं पिबन्ति। फरासीदेशीया जलं भेकरसमाहुः, किं तत् पेयम्? केवलमामेरिकावासी किञ्चिदधिकं जलं पिवति यतस्तेषां देशो ग्रीष्मे काले

निदारुणमुष्णो भवति, निउइयर्कं कलिकातामपेक्ष्यापि तप्तम्। जार्मान-जनाः प्रभूतं मद्यं (वियर्) पिबन्ति—परन्तु तन्न तथा भोजनकाले।

शीतले देशे सदैव शीताकुलत्वस्य सम्भावनास्ति, उष्णे तु देशे भोजनार्थमुपविश्य सशब्दं प्रभूतं जलं पीयते। अत एतेषां क्षुतं विना गतिर्नास्ति, अस्माकं चोद्गारं विना। तत्रायं नियमो दृश्यताम्—एतद्देशे भोजनार्थमुपविश्य यद्युद्गारः केनचित् क्रियेत तर्हि तस्याशिष्टतायाः पारं नास्ति। परन्तु करवस्त्रं निष्कास्य तत्र सशब्दं नासामलं विसृज, नैतेषां तत्र घृणा जायते। उद्गारं विनाऽस्माकं निमन्त्रको न तृप्यति किन्तु पञ्चभिर्जनैः सह भुञ्जानेन सशब्दं नासामलविसर्जनं कीदृशमिव ?

इंलण्डे आमेरिकायां च स्त्रीणां समक्षं मलमूत्रयोर्नामापि न कर्तुं शक्यम्। मलगृहं गन्तव्यमत्यन्तं रहसि। उदरस्यौष्ण्यमथवोदरस्य कोऽपि रोगः स्त्रीणां सविधे न वचनमर्हति, वृद्धा परिचिता चेत्तर्हि तदन्यदेव। स्त्रियो मलमूत्रं निरुध्य मरणमुपयास्यन्ति तथापि पुरुषाणां पुरतो न तस्य नामाप्यानेष्यन्ति।

फरासीदेशे नैतावत्। स्त्रीणां मलगृहस्य पार्श्वं एव पुरुषाणाम्। एते यान्त्येतेन द्वारेण, ताश्च द्वारान्तरेण, वहुषु स्थलेषु द्वारमेकम्, गृहं तु भिन्नम्। मार्गस्य द्वयोः पार्श्वयोर्मध्ये मध्ये प्रस्रावस्थानम्, तत्रापि केवलं पृष्ठदेश आव्रियते, स्त्रीभिर्दृश्यते किन्तु तत्र लज्जा नास्ति—यथाऽस्माकम्। सत्यं यदङ्गनास्तादृशमनावृतं स्थानं न गच्छन्ति। जार्मानजनानां स्वल्पतरा।

इंरेजा आमेरिकावासिनश्च संलापेऽपि नितरां सावधानाः, स्त्रीणां समक्षम्। जङ्घाशब्दोऽपि न वचनमर्हति। वयमिव फरासीदेशीया न संयतवाचः। जार्मान-रुशीयादयः सर्वेषां पुरतोऽश्लीलं भाषन्ते।

परन्तु प्रेमप्रणयविषयिणी वार्ता निर्बाधं चलति मात्रा पुत्रेण भ्रात्रा भगिन्या पित्रा च। पिता कन्यायाः प्रणयिनो (भविष्यद्वरस्य) कथां बहुविधोपहासेन कन्यां पृच्छति। फरासीदेशीया कन्या तत्रावनतमुखी, इंरेजस्य कन्या व्रीडाशीला, आमेरिकादेशीया कन्या निर्लज्जं स्पष्टं चोत्तरं प्रयच्छति। चुम्बनमालिङ्गनमपि न दोषावहं नाश्लीलम्। तत् सर्वं वचो वचनार्हम्। आमेरिकायां परिवारस्य पुरुषबन्धुरपि सत्यामात्मीयतायां गृहस्य युवतिं कन्यामपि करमर्दनस्य स्थाने चुम्बनं करोति। अस्मद्देशे प्रेमप्रणयस्य नामलेशोऽपि गुरुजनानां पुरस्तान्न भवितुमर्हति।

एतेषां प्रभूतानि धनानि। सुपरिष्कृतं भूषासङ्गतं वस्त्रं न परिधीयते चेत्तर्हि जनोऽसावशिष्टः—न हि स समाजं गन्तुं शक्नुयात्। शिष्टेन जनेन प्रत्यहं द्वित्रान् वारान् धौतमार्जितः प्रावारको ग्रीवावस्त्रं च परिवर्तनीयम्! न हि दरिद्रैरेतावत् कर्तुं शक्यते। उपरि विद्यमाने वस्त्रे कश्चन कलङ्कः किञ्चन कुञ्चनं

चेत् स्यात्तर्हि विषमः प्रश्नः। नखकोणे, हस्ते, मुखे चेत् स्वल्पं मालिन्यं स्यात्तदानीं कूटः समुपस्थितः। ग्रीष्मे पूतीभवनं स्यादुत यत् किमपि, हस्तत्राणं परिधायैव गन्तव्यम्, अन्यथा पथि हस्ते मालिन्यमुपगच्छेत्, तं च हस्तं कस्याश्चन स्त्रिया हस्ते न्यस्य सम्भाषणं नितान्तमशिष्टं कर्म। शिष्टसमाजे निष्ठीवनं मुखान्तर्धावनं दन्तवेध इत्यादि चेदनुष्ठीयते तर्हि तत्क्षणादेव चण्डालत्वप्राप्तिः!!

## पाश्चात्त्ये शक्तिपूजा

धर्मो ह्येषां शक्तिपूजा, अर्धवामाचार इव, पञ्चानां मकाराणामन्तिमाङ्गानि वर्जयित्वा। 'वामे वामा......दक्षिणे पानपात्रं......अग्रे न्यस्तं मरीचसहितं शूकरस्योष्णमांसं......कौलो धर्मः परमगहनो योगिनामप्यगम्यः।'[१२] प्रकाश्या सर्वसाधारणी शक्तिपूजा वामाचारः—मातृभावोऽपि प्रचुरः। प्रटेस्टचाण्टमतावलम्बिनस्तु इउरोपे नगण्याः—धर्मस्तु क्याथलिक एव। तस्मिन् धर्मे जिहोवा यीशुस्त्रिमूर्तिः—परन्तु सर्वमन्तर्हितं, जाग्रत्युपविष्टा 'माता'! शिशुं यीशुं क्रोडे संस्थाप्य माता राजमाना। स्थानानां लक्षेषु, प्रकाराणां लक्षैः रूपाणां च लक्षैस्तथाट्टालिकायां विशाले देवकुले पथप्रान्ते पर्णकुटिरे 'मातर्मातर्मातः'! राजाह्वयति 'मातः', प्रधानः सेनापति[१३]राह्वयति 'मातः', ध्वजाहस्तः सैनिक आह्वयति 'मातः', पोतोपरि नाविकस्य समाह्वानं मातरिति, जीर्णवस्त्रस्य धीवरस्याप्याह्वानं मातरिति, पथः प्रान्ते भिक्षुक आह्वयति 'मातः'। धन्या मेरी, धन्या मेरीति ध्वनिः सर्वत्र समुत्थितः।

पुनः कन्यायाः पूजा। इयं शक्तिपूजा न केवलं कामः किन्तु तादृशी शक्तिपूजा यथाऽस्मद्देशे काश्यां कालीघाटादिषु स्थानेषु कुमार्याः सधवायाश्च पूजा। इयं शक्तिपूजा वास्तविकी प्रत्यक्षा, न कल्पनामात्रम्। परमस्माकमिदं पूजनं केवलं तीर्थस्थाने, तस्मिन्नेव च क्षणे, एतेषामहोरात्रं द्वादश मासान्। आदौ स्त्रीजनानामासनं, शक्तेः (स्त्रियाः) वसनं भूषणं भोजनमुच्चस्थानं समादरो बहुमानश्चेति सर्वमादावेव। पूजा ह्येषा यस्याः कस्याश्चन स्त्रियाः परिचिताया अपरिचिताया वा, का कथाऽभिजाताया रूपवत्या युवतेः। पूजेयम् इउरोपखण्डे मूरैः—आरबमिश्रैर्मुसलमानमूरैः—प्रवर्तिता। ते स्पेनदेशं विजित्य शतकाष्टकं शासत आसन्, तदारभ्य प्रवृत्तिरेतस्याः। तेषां सकाशाद् इउरोपे सभ्यताया उन्मेषः, शक्तिपूजायाश्चाभ्युदयः। मूरैर्विस्मृतमेतत्, शक्तिहीनाः श्रीहीनाश्च

ते जाताः। स्वस्थानात् प्रच्युतास्ते आफ्रिकायाः प्रान्ते सभ्यताविवर्जिता वसन्त आसन्। तस्याश्च शक्तेः सञ्चारोऽभूद् इउरोपे, 'माता' मुसलमानान् परित्यज्य खृष्टानगृहं प्रविष्टा।

## इउरोपस्य नवजन्म

कीदृशमेतद् इउरोपखण्डम्? कृष्णा अर्धकृष्णाः पीता रक्ताश्चेति एशिया-आफ्रिका-आमेरिकानां सर्वविधा मनुष्याः कथमेतेषां पदानताः? कथं वैते कलियुगस्यैकाधिपतिस्वरूपाः?

एतस्य इउरोपस्य वोधाय पाश्चात्यधर्माकरः फ्रान्सदेशोऽवगन्तव्यः। पृथिव्या आधिपत्यम् इउरोपे, इउरोपस्य महाकेन्द्रं च पारिनगरी। पाश्चात्यसभ्यता, रीतिर्नीतिः, तमःप्रकाशौ, उत्तमाधमे इत्येतेषां चरमा परिपुष्टिरत्र पारिनगर्याम्।

इयं पारिनगरी खल्वेको महान् समुद्रः—मणिमुक्ताप्रवालाः प्रभूताः, पुनर्मकर-कुम्भीरा अपि वहवः। इउरोपस्य कर्मक्षेत्रमयं फ्रान्सदेशः। सुन्दरो देशः—चीनदेशस्य कियदंशं विहाय नास्त्येतादृशो देशः कुत्रापि। नातिशीतोष्णः, अत्युर्वरः, नास्त्यतिवृष्टिरनावृष्टिर्वा, निर्मलं नभः, मिष्टो रौद्रः, तृणानां शोभा, अनुन्नतः पर्वतसमूहः, चिनारवंशादिवृक्षाः, क्षुद्रास्तटिन्यः, क्षुद्राणि प्रस्रवणानि। तत्र जले रूपं, स्थले मोहः, वायौ मादकत्वमाकाशे चानन्दः। सुन्दरी प्रकृतिः, सौन्दर्यप्रियश्च मानवः। वालवृद्धौ स्त्रीपुंसौ धनिनिर्धनौ सर्वे स्वकीयं गृहादिकं भूमिक्षेत्रादिकं च घृष्ट्वा प्रमृज्य सज्जीकृत्योपस्कृत्य च चित्रवत् संस्थापयन्ति। केवलं जापान-देशं व्यतीत्य न कुत्राप्येतादृशो भावो दृष्टः। तत्रेन्द्रभुवनसदृशे हर्म्यपुञ्जे, नन्दन-काननतुल्य आरामे, उपवने तथा कृषिक्षेत्रेऽपि सर्वत्र कियतो रूपस्य कियत्याश्च सज्जायाः प्रदर्शनार्थं प्रयत्यते, सफलश्चासौ प्रयत्नः। प्राचीनकालादारभ्य गल[५४]-रोमक-फ्राँ[५५]-प्रभृतिजातीनां संघर्षभूमिरयं फ्रान्सदेशः। इयं फ्राँजातिः इउरोपे रोम-साम्राज्यस्य विनाशादनन्तरमैकाधिपत्यं लेभे। एतेषां सम्राट् शार्लमाञ्नः[५६] खड्गवलाद् इउरोपे खृष्टानधर्मं समचालयत्। एतस्याः फ्राँ-जातेः सकाशादेव आशियाखण्डे इउरोपस्य प्रचारोऽभूत्। अतोऽद्यापि इउरोपीयः खल्वस्मद्दृष्टौ फ्राँकिः फेरिङ्गिः प्लाँकिः फिलिङ्ग इत्यादिः।

सभ्यताया आकरः प्राचीनो ग्रीसदेशो निमग्नः। राजचक्रवर्ती रोमको वर्बरा[५७]णामाक्रमणतरङ्गाद् विलीनः। इउरोपस्यालोको निर्वापितः, इतश्चा-परस्याः कस्याश्चनातिवर्वरजातेः आशियाखण्डे प्रादुर्भावो जातः—आरवजातिः

सा। महता वेगेन सोऽयमारवतरङ्गः पृथिवीं व्याप्तुमारेभे। महावलः पारस्य-देश आरवपरतन्त्रो जातः, मुसलमानधर्मश्च तैरवशैः परिगृहीतः। परन्तु तत्-फलस्वरूपेण मुसलमानधर्मोऽन्यत् स्वरूपं जग्राह। स आरबीयो धर्मः पारसिकी च सभ्यता मिलितावभूताम्।

आरवखड्गेन साकं पारसिकी सभ्यता क्रमेण विस्तारं लभमानासीत्। सेयं सभ्यता प्राचीनग्रीसदेशाद् भारतवर्षाच्च परिगृहीता। पूर्वतः पश्चिमतश्च द्वाभ्यां दिशाभ्यां महावलेन मुसलमानतरङ्ग इउरोपमाजघान, सहैव सभ्यताविवर्जिते तमसापिहिते इउरोपे ज्ञानालोकः प्रसारं प्राप्नुवन्नासीत्। प्राचीन ीकजनानां विद्या वुद्धिः शिल्पं च वर्वराक्रान्तम् इतालिदेशं प्रविष्टम्। धरा-राजधान्या रोम-नगरस्य मृते शरीरे प्राणस्पन्दनं जातम्, तच्च स्पन्दनं फ्लोरेन्स-नगर्यां प्रवलस्वरूपं दधार, प्राचीन इतालिदेशो नवजीवनं लब्ध्वा प्राणवान् भवन्नासीत्, इदमेव रेनेसाँ[५८] नवजीवनं वोच्यते। परन्तु तन्नवजन्म इतालिदेशस्याभूत्। इउरोपस्येतरेषा-मंशानां तदानीमेव प्रथमं जन्म। खृष्टानीभूतस्य इउरोपस्य तदानीं षोडशे शतके जन्माभूद् यदा भारते आकवर-जाहाँगिर-शाजाहाँ-प्रभृतयो मोगलसम्राजः प्रवलं साम्राज्यं कृतवन्तः।

इतालिः खलु वृद्धा जातिः, सकृज् जागरणं संसूच्य पुनः पार्श्वपरिवर्तनं कृत्वा शयिता। तदा वहुभिः कारणैर्भारतवर्षमपि किञ्चिज् जागराम्वभूव, आकवरा-दारभ्य पुरुषत्रयकृते राजत्वे विद्याया वुद्धेः शिल्पस्य च प्रभूतः समादरोऽभूत् किन्तु नितरां वृद्धा जातिः पुनर्बहुभिः कारणैः पार्श्वपरिवर्तनेन शयिता।

इउरोपे इतालिदेशस्य पुनर्जन्मनः फलं लेभे खलु बलवती नूतनाभिनवा फ्राँजातिः। चतसृभ्यो दिग्भ्यः सभ्यतायाः सर्वा धारा आगत्य फ्लरेन्सनगर्यां सम्मिलिता नूतनं रूपं जगृहुः। किन्तु इतालिजातौ तादृशवीर्यधारणस्य शक्ति-र्नासीत्। भारतवत् स उन्मेषस्तत्रैवावसितः स्यात्, किन्तु सौभाग्यमेतद् इउरोपस्य यदेषा नूतना फ्राँजातिः सादरं तत्तेजो गृहीतवती। नवीनं शोणितं नवीना जाति-स्तस्मिंस्तरङ्गे महोत्साहेन स्वकीयां तरणीं प्लावयामास, तस्य स्रोतसो वेगः क्रमशो वर्धमानः, एका धारा धाराशतरूपेण वृद्धिं गता। इउरोपस्यापरा जातयो लोलुपाः सत्यः प्रणालीं खनित्वा तज्जलं स्वस्वदेशमानिन्युस्तत्र स्वेषां जीवनशक्तिं निधाय तस्य वेगं विस्तृतिं च वर्धयामासुः, स च तरङ्गो भारतमुपस्थितः। जापान-देशस्तेन संप्लवेन जीवनं लेभे, तज्जलं च पीत्वा मत्तो जातः। जापानो हि आशियाया नूतना जातिः।

## पारिनगरी फ्राँस्देशश्च

इयं पारिनगरी तस्या इउरोपीयसभ्यतागङ्गाया गोमुखम्। इयं विशाला राजधानी मर्त्यस्यामरावती, सदानन्दनगरी। अयं भोगः, अयं विलासः, अयमानन्दो न लण्डने, न वार्लिने, नाप्यन्यत्र कुत्रापि। लण्डने निउइयर्के धनमस्ति, वार्लिने विद्या बुद्धिश्च प्रभूता, नास्ति तत्र सा फरासी-मृत्तिका, सर्वोपरि नास्ति तादृशः फ्रान्सदेशीयो मानवः। अस्तु धनम्, अस्तु विद्या बुद्धिर्वा, अस्तु च प्राकृतिकं सौन्दर्यम्—मानवः कुत्र। इदमद्भुतं फरासीचरित्रं प्राचीनग्रीक-मृत्योरनन्तरं पुनर्जातमिव—सदानन्दः, सदोत्साहः, नितरां तरलमतिरपि नितरां गम्भीरः, सर्वस्मिन् कर्मणि विद्यत उत्तेजना, पुनर्बाधासत्त्वे निरुत्साहः। किन्तु तन्नैराश्यं फरासीमुखे न चिरं वरीवर्ति, पुनरभिज्वलति (तन्मुखम्)।

अयं पारिविश्वविद्यालय इउरोपस्यादर्शभूतः। पृथिव्या विज्ञानसभाकुलमेतेषाम् एकाडेमि-संस्थाया अनुकरणम्। इयं पारिः उपनिवेशसाम्राज्यस्य गुरुस्थानीया, सर्वासु भाषासु युद्धशिल्पगतानां संज्ञानां वहुलांशोऽधुनापि फरासीभाषायाः, एतेषां लेखानामनुकरणं सर्वासु इउरोपीयासु भाषासु। दर्शनविज्ञानशिल्पानामाकरः खल्वियं पारिः, सर्वेषु स्थानेष्वेतेषामेवानुकरणम्।

एत एव नगरवासिनोऽन्याश्च सर्वा जातयः पल्लीवास्तव्या इव भान्ति। यदद्यानुष्ठीयत एतैस्तदेव पञ्चाशतो वर्षेभ्योऽथवा पञ्चविंशतेरनन्तरं जार्मानइंरेजप्रभृतिभिरनुक्रियते, तद् विद्यायां वा स्यादुत शिल्प उत वा समाजनीतौ। इयं फरासीसभ्यता स्कटभूमिं (स्कटल्याण्ड) स्पृष्टवती, स्कटराज इंलण्डस्य राजा बभूव, फरासीसभ्यता इंलण्डदेशं समबोधयत्, स्टुआर्टवंशोद्भवस्य स्कटराजस्य काले इंलण्डदेशे रयाल-सोसाइटीप्रभृतीनां सृष्टिः।

पुनरयं फ्राँस्देशः स्वाधीनताया आवासः। प्रजाशक्तिर्महता वेगेनैतस्याः पारि-नगरीतः इउरोपखण्डमाकुलीकरोति। तस्माच्च दिवसात् इउरोपस्य नूतना मूर्तिर्जाता। साम्य-स्वतन्त्रता-भ्रातृत्वबोधकः[१] स ध्वनिः फ्राँस्देशाद् व्यपगतः, फ्राँस्देशोऽधुनाऽन्यं भावमन्यच्चोद्देश्यमनुसरति परन्तु इउरोपस्येतरा जातयोऽद्यापि तं फरासीविप्लवमनुकरोति।

स्कटभूमेः कश्चन प्रसिद्धो वैज्ञानिको विद्वांस्तस्मिन् दिवसे मां प्राह यत् पारिनगरी खलु पृथिव्याः केन्द्रभूता। येन देशेन पारि-नगर्या सह यावान् संयोगः संस्थापयितुं शक्यते सा जातिस्तावतीमुन्नतिं लप्स्यते। सत्यं यदेतद् वचनमीषदतिरञ्जितम्। किन्त्वेतदपि सत्यं यद् यदि केनापि जगति कश्चन नूतनो भावः प्रदेयः स्यात्तर्हीयं पारि-नगरी तस्य प्रचारस्य स्थानम्। अस्यां पारि-नगर्यां यदि

ध्वनिरुत्थितस्तर्हि तस्य प्रतिध्वनिं नूनमुत्पादयिष्यति ह्येतद् इउरोपखण्डम्। भास्कर-चित्रकर-गायक-नर्तक्यादीनामत्र प्राथमिकी प्रतिष्ठा चेल्लभ्येत तदानीमितरेषु देशेषु प्रतिष्ठालाभः सुगमो भवति।

अस्माकं देशे केवलं दुर्नामैव श्रूयतेऽस्याः पारि-नगर्याः, इयं पारिर्महाकदर्यं वेश्यापूर्णं नरककुण्डमिति। अवश्यं कथेयम् इंरेजैरेवोच्यते, अन्येषां च देशानां ये खलु धनिनः, येषां च जिह्वोपस्थौ व्यतीत्य द्वितीयो भोगो जीवनेऽसम्भवी तैर्नूनं पारिनगरी विलासमयी जिह्वोपस्थोपकरणमयी चेति दृश्यते !

किन्तु लण्डन-बार्लिन-भियेना-निउइयर्कप्रभृतीन्यपि तादृशानि वारवनितापूर्णानि, भोगोद्यानपूर्णानि। तत्र भेदोऽयं यदन्येषु देशेष्वाश्रितेन्द्रियचर्चा पशुवत्, पारिनगर्याः, सभ्यायाः पारेः, मालिन्यं स्वर्णावरणावृतम्। वन्यः शूकरः पङ्के लुठति मयूरश्च पुच्छविस्तारेण नृत्यतीत्यनयोर्यादृशो भेदस्तादृश एव भेदो विद्यत इतरेषां नगराणां पैशाचिकभोगस्य पारिविलासस्य च मध्ये।

उच्यतां कस्यां जातौ भोगविलासार्थमिच्छा न विद्यते ? अन्यथा पृथिव्यां यस्यैव कियद्धनमुत्पद्यते स कथं पारिनगरीमभि धावति ? राजानो रहसि स्वेषां नामानि संगोप्यास्मिन् विलासविवर्ते स्नात्वाऽऽत्मनः पवित्रीकर्तुं कथमायान्ति ? इच्छा वर्तते सर्वेषु देशेषु, उद्योगे त्रुटिः स्वल्पता वा कुत्रापि न दृश्यते, तदेते सुसिद्धा जाताः, भोक्तुं जानन्ति, विलासस्य परां काष्ठामारूढाः।

तत्रापि कदर्यनृत्यपरिहासादिकस्य भूयान् भागः खलु विदेशीयानां कृते। फरासीजनो हि नितरां सावधानः, अकारणं नार्थं व्ययति। अयं घोरो विलासः, एतानि पानभोजनगृहाणि यत्र सकृद् भोजने कृते पुरुषस्य सर्वस्वमन्तं याति तत् सर्वं विदेशीयानां मूर्खधनिनां कृते। फ्राँसदेशीया नितरां सुसभ्याः, आचारवैशिष्ट्यं प्रभूतम्, अत्यन्तमाद्रियन्ते जनान्, धनानि सर्वाण्येव निष्कृष्य गृह्णन्ति, स्मयन्ते च धीरम्।

पुनः परिहासोऽयं यद् आमेरिकान-जार्मान-इंरेजप्रभृतीनामुन्मुक्तः समाजः ; विदेशीयः सहसा सर्वं द्रष्टुं श्रोतुं च शक्नोति। द्वित्राणां दिनानां परिचयेऽपि आमेरिकावासी स्वगृहे दिवसदशकमवस्थानार्थं निमन्त्रयते, जार्मानजनोऽपि तथैव, इंरेजस्तु स्वल्पविलम्बेन। फरासीजन एतस्मिन् विषयेऽत्यन्तं पार्थक्यं संस्थापयति, परिवारे घनिष्ठं परिचितश्चेन्न भवति तदा न कमपि स्वगृहे वासार्थमामन्त्रयति। किन्तु यदा विदेशीयस्तादृशमवसरं लभते, फरासीपरिवारं द्रष्टुं ज्ञातुं चावकाशं प्राप्नोति तदाऽन्यः कश्चन बोधः समुत्पद्यते। ननु मत्स्यविपणिं दृष्ट्वा बहुभिर्वैदेशिकैरस्मज्जातीयचरित्रमधिकृत्य मतविशेषो यत् प्रकटयते तत् कीदृशं मौढ्यम् ? तथेयं पारि-नगरी। अस्मद्देशवदेतद्देशेऽप्यनूढा कन्या सुरक्षिता

भवति, न तासां प्रायः समाजे मेलनं संघटते। विवाहादनन्तरमेव स्वभर्त्रा साकं समाजे मेलनं भवति, विवाहादिकं मातापितृभ्यामुपकल्प्यते, यथाऽस्माकम्। एते चात्यर्थं प्रमोदप्रियाः, यत् किमपि बृहत् सामाजिकमनुष्ठानं नर्तक्या नृत्यं विना न पूर्णत्वमेति, यथास्मदीये विवाहपूजादिकर्मणि सर्वत्र नर्तक्या आगमनं भवति। इंरेजो विषण्णवदनः, तमसाच्छन्ने देशे वसति, सदा निरानन्दः, तेषां मते सर्वमेतद-श्लीलं किन्त्वेतदेव रङ्गालये चेदनुष्ठीयेत तर्हि नास्ति दोषः। एतदपि वक्तव्यं यदेतेषां नृत्यमस्मद्दृष्टौ यद्यप्यश्लीलं भाति तथाप्येतैः सोढमेतत्। कौपीनमात्रं परिधाय नर्तनं दृश्यते, न तद् ग्राह्यमेव। परन्तु इंरेजा आमेरिकावासिनश्चैतस्य दर्शनमपि न परित्यक्ष्यन्ति पुनः स्वगृहं गत्वा गर्हणमपि न विहास्यन्ति।

स्त्रैणाचारः खलु पृथिव्याः सर्वेषु देशेषु सम एव, यथा पुरुषस्य परस्त्रीसंसर्गे सति न तावान् दोषो भवति किन्तु स्त्रीणां विषय एव संकटः। परं फरासीपुरुषः स्वल्पं प्रकटस्वभावो यथेतरेषां देशानां धनिजना एतस्मिन् विषयेऽनुद्विग्नास्तथा। पुनः इउरोपीयः सामान्यो जनो विषयं तं न तथा गर्ह्यं मन्यते। अनूढस्य पाश्चात्त्ये देशे स दोषः सुमहानिति न मन्यते, अपि तु विद्यार्थी युवकश्चेत्तस्मादत्यर्थं विरतः स्यात्तदा वहुषु स्थलेषु पितृभ्यां दोषो गण्यते यदि तत्पुत्रो भीरुः सलज्जश्च जायेत। पाश्चात्त्ये पुरुषाणामेको गुण आवश्यकः—साहसमिति। एतेषां 'भार्चु' इति शब्दस्तथाऽस्माकं वीरत्वमिति शब्दश्च समार्थौ। तस्य शब्दस्येतिहासमालोकय, तेषां मते पुरुषाणां साधुत्वमित्यनेन किमुच्यते। स्त्रीणां कृते सतीत्वं खल्वत्यावश्यकम्।

एतेषां सर्वेषां वचनानामुद्देश्यमेतद् यदेकैकस्या जातेरेकैकं नैतिकं जीवनोद्देश्यं विद्यते, तस्मादेव तस्या जाते रीतिर्नीतिश्च विचारमर्हति। तेषां दृष्टौ ते द्रष्टव्याः। अस्मद्दृष्टावेतेषां दर्शनं पुनरेतेषां दृष्टावस्माकं दर्शनमित्युभयमेवासङ्गतम्।

एतद्विषयेऽस्माकमुद्देश्यमेतेषां साक्षाद् विपरीतम्, अस्माकं ब्रह्मचारी (विद्यार्थी) इति शब्दः कामजयित्वं वोधयति। विद्यार्थी कामजिदिति शब्दौ समार्थौ।

अस्माकमुद्देश्यं मोक्षः। ब्रह्मचर्यं विना तत् कथं सम्भवेदित्युच्यताम्। एषा-मुद्देश्यं भोगः, नास्ति ब्रह्मचर्येण तथा प्रयोजनम्। किन्तु स्त्रीजनस्य सतीत्वं चेन्नश्येत्तदा पुत्रादिकं नोत्पद्यते, समग्राया जातेर्ध्वंसो भवति। पुरुषेण विवाहानां द्वे विंशती चेदनुष्ठीयेते, न तेन तावती क्षतिः, अपि तु वंशवृद्धिः सम्यग् जायते। स्त्रीजनस्य न सममेकाधिकः स्वामी प्रचलति—फलं तस्य वन्ध्यात्वम्। अतः सर्वेषु देशेषु स्त्रीजनस्य सतीत्वे विशेषाग्रहो दृश्यते, पुरुषे विद्यते चेत्तद् वाहुल्यमेव। 'प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति।'[६०]

अस्तु, सारमेतद् यदेतादृशं नगरं भूमण्डले कुत्रापि न विद्यते। पूर्वस्मिन् काले नगरमिदमन्यविधमासीद् यथाऽस्माकं काश्यां वङ्गीयाऽवासस्थानमस्ति। अप्रशस्तो वक्रो मार्गः, मध्ये मध्ये गृहद्वयमेकीकृत्य विद्यमानं तोरणम्, प्राचीरसन्निधौ कूप इत्यादिकम्। एतस्मिन् वर्षे प्रदर्शनानुष्ठाने काचन क्षुद्रा पुरातनीं पारि-नगरी विरच्य प्रदर्शिता। कुत्र गता सा पारिः, क्रमशो विवर्तमाना, एकैकस्मिन् युद्धे विद्रोहे च कश्चनांशविशेषो भग्नश्चूर्णितश्च, पुनस्तत्र परिष्कृता नूतनोन्मुक्ता च पारिस्तत्र समुद्भूता।

वर्तमानायाः पारेर्भूयानेवांशस्तृतीयेन न्यापोलेअँ-महोदयेन निर्मितः। सोऽयं न्यापोलेअँ प्रहृत्य संकृत्य बलादेव सम्राडभूत्। फरासीजातिस्तस्मात् प्रथम-विप्लवादारभ्य सदा चञ्चला। अतएव प्रजानां सन्तोषार्थं, पारिनगर्याः सदा-चञ्चलनिर्धनजनान् कर्मसंस्थानेन सन्तोषयितुं च सम्राजा क्रमेण रथ्याघट्टौ तोरण-स्तम्भौ च निर्मितौ। अवश्यं पारेः सर्वाणि प्राचीनदेवालयतोरणस्तम्भादीनि रक्षितानि। रथ्याघट्टादयः सर्वे नूतनाः सञ्जाताः। पुरातन-नगरस्य प्रणाली-प्राचीरादिकं सर्वं भङ्क्त्वा मार्गमध्यारामस्य[११] अभ्युदयो भवन्नासीत्, तस्मादेव च नगरस्य सर्वोत्तमा रथ्या पृथिव्या अद्वितीया शाँजेलिजे[१२]इति नामधेया समुद्भूता। रथ्येयमेतावत्यायता यन्मध्ये पार्श्वद्वये चोद्यानं चलति, कुत्रचन चातिमहती वर्तुला-कृतिः सञ्जाता—तस्या नाम 'प्लास्-द-ला-कन्कर्द'[१३] इति। 'प्लास-द-ला-कन्कर्द' इतीदं परितः प्रायः समान्तरालरूपेण फ्राँस-देशस्यैकैकस्या जिलाया एकैका यान्त्रिकी नारीमूर्तिः। तास्वेका मूर्तिः स्ट्रासबुर्ग् इत्याख्याया जिलायाः। १८७२ खृष्टाब्दीययुद्धानन्तरं सा जिला जार्मानजनैर्बलादधिकृता। परन्तु फ्राँसस्य तद् ुःखं नाद्यापि विनिवृत्तम्,सा मूर्तिरहोरात्रं प्रेतोद्दिष्टैः पुष्पमाल्यैरावृता तिष्ठति। यादृशं माल्यं जनैः स्वजनसमाधौ स्थाप्यते तादृशं बृहदाकारं माल्यमहर्निशं तस्या मूर्तेरुपरि केनचन न्यस्यते।

देहलीनगरस्य चाँदनि-चौक् कियदंशेनास्य प्लास-द-ला-कन्कर्द इत्यस्य सदृशमेकदाऽसीदिति मन्यते। केषुचित् स्थानेषु जयस्तम्भः, विजयतोरणः, नराणां नारीणां सिंहादीनां च महत्यो भास्कर्यमूर्तयः। महावीरस्य प्रथमन्यापोलेअँ-महोदयस्य स्मारकः कश्चन विशालो धातुनिर्मितो विजयस्तम्भः। तद्देहे न्यापोलेअँ-कालीनो युद्धविजयोऽङ्कितो वर्तते। उपरि च तस्य मूर्तिः। अन्यस्मिंश्च स्थाने वर्तते स्मारकं चिह्नं प्राचीनदुर्गस्य वास्तिलस्य[१४] ध्वंसस्य। तदा राज्ञा-मेकाधिपत्यमासीत्, यदा तदा यं कञ्चन कारायां निक्षिप्तवन्तः। नास्ति विचारः, न किमपि तादृशं,केवलं नृपतिना कश्चन निर्देशो विलिख्य प्रादीयत,तस्य नाम 'लेटर्-द-क्याशे'[१५], अस्यार्थो राजमुद्राङ्किता लिपिः। अनन्तरं तद्विषयमधिकृत्य नास्ति

कोऽपि प्रश्नः—स जनः किमपि कृतवान् न वा, दोषी वा निर्दोषो वा, किन्तु स नीत्वा वास्तिलाभ्यन्तो निक्षिप्तः, तस्मात् स्थानात् न तथा कस्यापि निष्क्रमणमभूत् । राज्ञां प्रणयिनीनां कापि यदि कस्मैचित् कुप्येत तदा राज्ञा तां मुद्रां कारयित्वा तं जनं सा वास्तिलान्तो निचिक्षेप । पश्चाद् यदा सर्वे देशवासिन एतादृशेनोपमर्देन क्षिप्ता जाताः, 'वैयक्तिकी स्वतन्त्रता', 'सर्वे समानाः', 'न कोऽपि क्षुद्रो महान् वा' इति ध्वनिजातं समुत्थापयामासुः, पारि-नगर्या जना उन्मत्ताः सन्तो राजानं राज्ञीं चाक्रान्तवन्तस्तस्मिन् समये प्रथमत एव मानुषोपमर्दस्य घोरनिदर्शनस्वरूपं वास्तिल-दुर्गं भूमिसात् कृतवन्तः, तत्र चैकां रजनीं नृत्यगीताभ्यां प्रमोदं चक्रुः । ततो नृपतिं[६६] पलायमानं धृतवन्तः । नृपतेः श्वशुरः अस्ट्रियाधीशो जामातुः साहाय्यार्थं सेनां प्रेषयतीति श्रुत्वा प्रजाः क्रोधान्धाः सत्यो राजानं राज्ञीं च निजघ्नुः । सर्वे देशवासिनः, स्वतन्त्रतायाः साम्यस्य च व्यपदेशेन प्रमत्ताः सञ्जाताः, फ्राँस्-देशे प्रजातन्त्रं प्रवर्तितम् । अभिजातजनानां यः कोऽपि धृतः स एव निहतः, केचन पुनरुपाधिप्रभृति सन्त्यज्य प्रजानामेव पक्षं समाश्रितवन्तः । न केवलमेतदेव, अपि तु तैरुक्तं "हे पृथिव्या जनाः, युष्माभिरुत्थातव्यम्, नृपादयः सर्वे एवोपमर्दका निहन्यन्ताम्, सर्वाः प्रजाः स्वाधीनाः सन्तु, सर्वे समानाः सन्तु !" तदा कृत्स्नस्य इउरोपखण्डस्य राजानो भयादस्थिरा जाता यद्ययमग्निः स्वदेशं स्पृशेत्, यदि वा स्वेषां सिंहासनं विलुठ्य पतेत् । अतस्तस्य निर्वापणाय बद्धपरिकराः सन्तः सर्वाभ्यो दिग्भ्यः फ्राँसदेशमाक्रान्तवन्तः । इतश्च प्रजातन्त्रस्याधिकारिणः पुरुषाः 'ला पात्रि आ दाँजे'[६८] (जन्मभूमिर्विपदि) इत्युद्घोषयामासुः, सा घोषणाऽग्निवत् कृत्स्ने देशे विस्तृतिमापन्ना । वालवृद्धौ, स्त्रीपुंसौ सर्वे 'मार्साइए'-[६९]महागीतं फ्राँस्-देशस्योत्साहव्यञ्जकं महागीतं गायन्तो जीर्णवसनाः, महाशीतेऽपि नग्नपदाः, स्वल्पभोजनाः फरासीप्रजा गणशोऽग्रं धावित्वा सेनारूपं समास्थाय कृत्स्नस्य इउरोपखण्डस्य चमूमभिगताः । वालो वा वृद्धो वा, धनी वा दरिद्रो वा सर्वे एवाग्नेयास्त्रं स्कन्धे कृत्वा निर्गताः, निर्गताश्च 'परित्राणाय....विनाशाय च दुष्कृताम्'[७०] । समग्रम् इउरोपखण्डं तस्य वेगं सोढुं न शशाक । फरासीजातेरग्रे सैन्यानां स्कन्धे स्थितः कश्चन वीरः—तस्याङ्गुलिचालनेन धरा कम्पितुमारेभे; स एव न्यापोलेअँ ।

अग्न्यस्त्रस्याग्रेण खड्गधारया च इउरोपस्यास्थिमज्जायां प्रवेशितमेतत्त्रयं—स्वतन्त्रता साम्यं भ्रातृत्वमिति । त्रिवर्णस्य ककार्ड[७१] इत्यस्य जयोऽभूत् । ततो न्यापोलेअँ फ्राँस्-महाराज्यं दृढबद्धावयवं सम्पादयितुं सम्राडभूत् । ततस्तस्य कार्यं सम्पन्नम् । पुत्रो न जात इति सुख-दुःखयोः सहचरी भाग्यलक्ष्मी राज्ञी जोसेफिन्[७२] परित्यक्ता, अस्ट्रियाराजस्य कन्यामुपयेमे[७३] । जोसेफिन् इत्यनया

सहैव भाग्यं विपरिवर्तितं, रुशदेशस्य जयार्थं गतोऽसौ किन्तु तुषारे तस्य सेना नष्टा। इउरोपखण्डमेतमवकाशं लब्ध्वा तेन वलात् सिंहासनं समत्याजयत्, कस्मिंश्चन द्वीपे तं प्रेषितवत्[७४], प्राचीनराजवंशस्य कमपि च सिंहासने समासयत्।

आहतः सिंहस्तस्माद् द्वीपात् पलायितः, पुनः फ्राँस्देशं च प्राप्तः[७५]। फ्राँस्-वासिनः सर्वे तं शिरसि संस्थापयामासुः, राजा च पलायितः। परं वृक्णमदृष्टं न पुनः संयुक्तम्। समग्रम् इउरोपखण्डं सम्भूय तं पराजितवत्, न्यापोलेअँ इंरेजानां कञ्चन पोतमारुह्य तेषां शरणमागतः। इंरेजाः 'सेण्ट हेलेना'-नामके दूरवर्तिनि द्वीपे तं काराऽभ्यन्तरे रक्षितवन्तः—आमरणम्[७६]। पुनः पुरातनो राजवंशः समागतः, तस्यैव भ्रातुष्पुत्रो राजाऽभवत्। फ्राँस्देशीयाः पुनरपि क्षिप्ताः, राजादिकं विताडितवन्तः, आगतं पुनः प्रजातन्त्रम्। महावीरस्य न्यापोलेअँमहोदयस्य कश्चन भ्रातुष्पुत्र एतस्मिन् समये क्रमेण फ्राँस्देशे प्रीतिभाजनमभूत्, क्रमेणोपजापं समास्थाय स एकदाऽऽत्मानं सम्राजं समघोषयत्। आसीत् स तृतीयो न्यापोलेअँ, कतिचिद्दिनानि तस्य भूयान् प्रतापोऽभवत्। परन्तु जार्मानैः सह युद्धे पराजितस्य तस्य सिंहासनं गतम्,[७७] पुनः फ्राँस्देशे प्रजातन्त्रं जातम्। तत एव प्रजातन्त्रं चलति।

## परिणामवादः

यः खलु परिणामवादो भारतस्य प्रायः सर्वेषां सम्प्रदायानां मूलभित्तिस्वरूपः स एव परिणामवादोऽद्य इउरोपीयं वहिर्विज्ञानं प्रविष्टः। भारतं विहायान्यत्र सर्वेषां देशानां धर्मे सिद्धमेतदासीद् यत् पृथिवीयं वहुभिः पृथग् विद्यमानैः खण्डैः पूर्णा। ईश्वरोऽपि भिन्नः, प्रकृतिरपि भिन्ना, मनुष्योऽपि भिन्नः, तथा पशुपक्षिणौ कीट-पतङ्गौ, वृक्षशाखे, मृत्तिका, प्रस्तरो धात्वादिश्च सर्वः पदार्थो भिन्नः! एवं पृथक्त्वेनैव भगवतैतेषां सृष्टिर्विहिता।

ज्ञानशब्दार्थो हि वहूनां मध्ये विद्यमानस्यैक्यस्य सन्दर्शनम्। ये खलु पदार्था भिन्ना आपाततः पृथगिवाभासन्ते तेषां मध्ये विद्यमानस्यैक्यस्यालोकनम्। येन सम्वन्धेन तदैक्यं मानुषेण दृश्यते स सम्वन्धो नियम इत्युच्यते। अस्यैव नाम प्राकृतिको नियमः।

उक्तं चाधस्ताद् यदस्माकं विद्या वुद्धिश्चिन्ता च सर्वमेवाध्यात्मिकम्, कृत्स्नो विकासो धर्मे। पाश्चात्त्ये तु सर्वोऽसौ विकासो वहिः, शरीरे, समाजे। भारतवर्षे चिन्ताशीला मनीषिणः क्रमेण ज्ञातवन्तो यदयं पृथग्भावो भ्रम एव। सर्वेषामेतेषां भिन्नानां मध्येऽपि वर्तते कश्चन सम्वन्धः। मृत्तिका प्रस्तरो वृक्षशाखे

जन्तुर्मानुषो देव ईश्वरोऽपि स्वयं भवतु, किन्तु सर्वेष्वेतेष्वेकत्वं विद्यते। अद्वैत-वादी त्वेतस्य परां काष्ठां समारूढः, उक्तं च तेन यत् सर्व एव तस्यैकस्य विकासः। वस्तुत इदमध्यात्ममधिभूतं च जगदेकमेव, तस्य नाम 'ब्रह्म'। यश्चायं पृथगिति बोधः समुत्पद्यते स भ्रमः, सा च मायेत्यभिहिता, सैवाविद्या, अज्ञानं वा। इयमेव ज्ञानस्य परा काष्ठा।

अस्तु तावद् भारतवर्षस्य कथा, विदेशेऽपि यदि कश्चनैतां कथामधुना न बोद्धुं शक्नुयात्तर्हि कथमसौ पण्डित इत्यभिधातुं शक्यः। सारमेतद् यदेतेषां भूयांसः पण्डिता वार्तामेतामवगतास्तेषां प्रक्रियया—जडविज्ञानमाश्रित्य। तत् कथं तदेकं बहु जातमिति नास्माभिरप्यवगम्यते, नापि तैः। अस्माभिरपि सिद्धान्तितं यत्तत्स्थलं बुद्धेरगम्यम्, तैरपि तदेव कृतम्। परं तदेकं कीदृशानि स्वरूपाणि लब्धवत्, कीदृशं जातित्वं व्यक्तित्वं च लभत इत्यनयोरनसन्धानमेव विज्ञानम्[७८]।

## समाजस्य क्रमविकासः

अतोऽद्यास्मिन् देशे प्रायः सर्व एव परिणामवादिनः[७९]। यथा क्षुद्रो जन्तु-र्विपरिणम्य महान् जन्तुर्भवति, महानपि कदाचित् क्षुद्रो भवति, लुप्यते च, तथा मानुषः सहसा सुसभ्यामवस्थां प्राप्य जन्म लेभ इति न केनाप्यधुनाऽत्र विश्वासः क्रियते। विशेषतस्त्वेतेषां पितरोऽग्रजाश्च पूर्वेद्युः पूर्वतरे वा दिवसे बर्बरा आसन्, तस्मात् स्वल्पैरेव दिवसैरेतज्जातम्। अतश्चोक्तमेतैर्यत् सर्वे मनुष्याः क्रमेणा-सभ्यावस्थामतिक्रम्योत्थिता उत्तिष्ठन्ति च। आदिमो मानवः काष्ठप्रस्तर-निर्मितैर्यन्त्रैः कर्म सम्पादितवान्, चर्म वा वृक्षपत्रं वा परिधाय दिनं यापयामास पर्वतगुहायां पक्षिनीडतुल्ये वा कुटीरे न्युवास। एतस्य निदर्शनं खलु सर्वेषु देशेषु मृत्तिकाया अधस्तादुपलभ्यते, केषुचिच्च स्थलेषु स्वयं तदवस्था मनुष्या वर्तमानाः। क्रमेण मनुष्या धातुव्यवहारं शिक्षितवन्तः—स धातुः कोमल एव, त्रपु च ताम्रं च। तयोर्मिश्रणेन यन्त्रादिकस्यास्त्रस्य शस्त्रस्य च निर्माणं शिक्षित-वन्तः। प्राचीना ग्रीक-वाबिल-मिसरीया अपि बहुकालपर्यन्तं लौहव्यवहारं न ज्ञातवन्तः—यदा ते पूर्वापेक्षया सभ्या जाताः, ग्रन्थादिकमपि लिखितवन्तः, स्वर्णरौप्ये व्यवहृतवन्तस्तदानीमपि। आमेरिका-महाद्वीपस्य ये खल्वादिमा निवासिनस्तेषां मध्ये मेक्सिको-पेरु-मायादिजातय आपेक्षिका सुसभ्या आसन्, सुमहतो देवालयान् निर्मितवन्तः, स्वर्णरौप्ययोः प्रभूतो व्यवहार आसीत्

(किमधिकम्, एतयोः स्वर्णरौप्ययोर्लोभादेव स्पेनदेशीयास्तान् नाशितवन्तः)। परन्तु कृत्यं तत् सर्वमग्निप्रस्तरनिर्मितेनास्त्रेण महता श्रमेण कृतवन्तः, लौहस्य नामगन्धमपि न ते ज्ञातवन्तः।

आद्यावस्थायां मनुष्या धनुःशराभ्यां जालादिभिर्वा पश्वादिकं मत्स्यं वा निहत्य खादितवन्तः, क्रमेण कृषिकर्म तैः शिक्षितं पशुपालनमपि। वन्यं पशुं वशमानीय स्वकर्म साधितवन्तः। अथवा यथाकालमाहारार्थं पशून् पालितवन्तः। गवाश्वशूकरहस्त्युष्ट्रमेषच्छागकुक्कुटादयः पशुपक्षिणः मनुष्याणां गृहपालिता जाताः! एतेषां कुक्कुरो हि मानुषाणामादिमो वन्धुः।

ततः कृष्यादिकं प्रारब्धम्। यत् फलमूलशाकपत्रादिकं धान्यतण्डुलादिकं च मनुष्यैरश्यते तस्यैव वन्यं स्वरूपमन्यविधम्। मनुष्याणां यत्नाद् वन्यं फलं वन्यं तृणं नानाविधं वृहदाकारं सुखाद्यमुपादेयं च फलमिति विपरिणतम्। प्रकृतौ स्वत एवाहर्निशं विपरिवर्तनं भवत्येव। वहुजातीया वृक्षलताः समुत्पद्यन्ते, पशुपक्षिणां शरीरसंसर्गाद्, देशकालपरिवर्तनाच्च नवीनानां जातीनां सृष्टिर्भवति। किन्तु मनुष्यसृष्टेः प्राक् प्रकृत्या तूष्णीं तरोर्लताया जीवस्य जन्तोश्च विवर्तनं साधितमासीत्, मनुष्यस्तु स्वजन्मन आरभ्य तत् सर्वं द्रुतं परिवर्तयामास। एकस्माद् देशाद् वृक्षपत्रादिकं जीवो जन्तुश्चान्यं देशं मानुषेण नीतम्। तेषां परस्पर मिश्रणेन नानाविधा अभिनवा जीवजन्तुवृक्षपत्रादिकानां जातयः समुत्पन्नाः।

आदिमावस्थायां विवाहो न विद्यते, क्रमेण यौनसम्वन्धः समुपस्थितः। आदौ वैवाहिकः सम्वन्धः सर्वस्मिन् समाजे मातुरुपरि न्यस्त आसीत्। पितुर्न तथा चिह्नं दृश्यमानमभवत्। मातुर्नाम्ना पुत्रकन्याया नाम वभूव। स्त्रीणां हस्ते कृत्स्नं धनं न्यस्तमासीत् पुत्रकन्याया भरणार्थम्। क्रमेण धनादिकं पुरुषाणां हस्ते गतं, स्त्रियोऽपि गताः। पुरुषेणोक्तम्—"यथा धनधान्यमिदं मम, कृषिकर्मणा लुण्ठनादिना वा मयोपार्जितमेतदिति हेतोर्यदि कोऽपि तत्र भागं गृह्णाति तर्हि मया मह विरोधो भविष्यति" तथैव पुनरुक्तं "एताः स्त्रियो मम, यदि कोऽपि तत्र हस्तं न्यस्येत्तर्हि विरोधो जनिष्यते।" वर्तमानविवाहस्य प्रारम्भो जातः। स्त्रियः पुरुषाणां घटपटभृत्यादिवदधिकारभूता जाताः। प्राचीना रीतिः—एकस्य गणस्य पुरुषो गणान्तरे विवाहं कृतवान्। सोऽपि विवाहो वलादेव, अन्यस्माद् गणात् कन्यां वलेन गृहीत्वा। क्रमेण तद् वलपूर्वकं ग्रहणं परिवर्तितम्, स्वेच्छाविवाहः प्रचलितः। किन्तु सर्वेषां विषयाणां किञ्चिच् चिह्नं विद्यते। अधुनापि प्रायः सर्वेषु देशेषु वरं प्रति कृतकाक्रमणं भवति। वङ्गेषु इउरोपे च तण्डुलेन वरमाघ्नन्ति, भारतस्य पश्चिमाञ्चले कन्याया आत्मीयाः स्त्रीजना वरानुगामिनः समुद्दिश्य निन्दावाक्यमुच्चारयन्ति, एवमन्यत्र।

# देवासुरौ

समाजसृष्टिः प्रवृत्ता। देशभेदेन समाजस्य सृष्टिर्भवति। समुद्रस्य तीरे ये न्यवसंस्तेषां भूयांसो मत्स्यान् धृत्वा जीविकां निर्वाहयन्ति स्म। ये खलु समतलभूमौ, तेषां तु कृषिकर्म। ये तु पार्वत्यदेशेऽवसंस्ते मेषचारणमकुर्वन्, ये पुनर्मरुमयदेशे, तैश्छागोष्ट्रचारणं समाश्रितम्। अन्ये च केचन वनमधिवसन्तो मृगयामवलम्ब्य भुक्तवन्तः। ये खलु समतलभूमिं लेभिरे, कृषिकर्मादिकं शिक्षितवन्तस्तेषामुदरविषयिणी चिन्ता कथञ्चिदुपशान्तेत्युच्चचिन्तार्थमवकाशं प्राप्तवन्त इति ते सभ्यतरा जाताः। परं सभ्यतालाभेन साकं शरीरं दुर्बलं बभूव। येषां शरीरमहोरात्रं मुक्ते वायौ विद्यते तेषां मांसप्रधानं भोजनम्, ये पुनर्गृहान्तर्वसन्ति तेषां भोजनं खलु सस्य-प्रधानम्। अनयोर्महान् भेदः सञ्जातः। मृगयुः पशुपालको मत्स्यजीवी वा यदि कदाचिद् भोजनाभावमनुभवति तदा दस्युतां जलदस्युतां वा समाश्रित्य समतलवासिनां लुण्ठनं कुर्वन्नासीत्। समतलवासिनश्चात्मरक्षार्थं घनसन्निविष्टाः सम्बभूवुः, क्षुद्राणां राज्यानामुत्पत्तिर्जाता।

देवा धान्यतण्डुलादिकं भक्षयन्ति, ते सुसभ्याः, तेषां वासस्थानं ग्रामनगरोद्यानानि, परिधानमोतप्रोतं वस्त्रम्। असुराणामावासः पर्वतो मरुभूमिः समुद्रतटो वा। भोजनं वन्यः पशुर्वन्यानि च फलमूलानि, परिधानं कृत्तिः। आरण्यं द्रव्यं मेषच्छागगवादयो वा तेषामाहारः, अथवा देवेभ्य एतेषां विनिमयेन यत् किञ्चिद् धान्यतण्डुलादिकं लभ्यते तदपि। देवानां शरीरं श्रमासहिष्णु दुर्बलं च। असुराणां शरीरमुपवासकृच्छ्रकष्टसहने विशेषेण पटुतामापन्नम्।[८०]

असुराणां खाद्याभावे जाते गणशस्ते पर्वतात् समुद्रतीरादागत्य ग्रामनगराणां लुण्ठनं चक्रुः। कदाचिद्वा धनधान्यानां लोभाद् देवानाक्रान्तवन्तः। बहवो देवाश्चेद् न संघं निर्मातुं शक्नुयुस्तदानीमसुराणां हस्ते तेषां मृत्युः। देवतानां बुद्धिः प्रबला सती नानाविधं यन्त्रादिकं निर्मितवती। ब्रह्मास्त्रं गरुडास्त्रं वैष्णवास्त्रं शैवास्त्रं च सर्वं देवतानाम्। असुराणामस्त्रं तु सामान्यमेव किन्तु शरीरे तेषामसाधारणं बलम्। पुनः पुनरसुरा देवान् पराजयन्ते किन्तु यथा सभ्याः स्युस्तन्न जानन्त्यसुराः, कृषिकर्म न जानन्ति, बुद्धिं न सम्यक् प्रयोक्तुं शक्नुवन्ति। विजयं प्राप्ता अप्यसुरा यदि विजितानां देवानां स्वर्गे राज्यं परिचालयितुमुद्युक्ता भवन्ति तर्हि कियत्सु दिनेषु देवानां बुद्धिकौशलेन ते देवानां दासाः सन्तस्तत्र पतिता दृश्यन्ते,

अथवाऽसुरैर्लुण्ठनं समाप्य स्वस्थानं गृह्यते। देवताः सम्भूय यदाऽसुरान् विताडयन्ति तदा तान् समुद्रमध्ये पर्वते वने वा विताडयन्ति। क्रमेणोभयोरेव पक्षयोर्गणस्य संख्या विवर्धमाना, देवानां लक्षाणि सम्मिलितानि, असुराणामपि लक्षाणि समवेतानि। महासंघर्षो मिश्रणं जयपराजयौ च प्रवृत्तम्।

एतेषां सर्वविधानां मानवानां मिश्रणेन वर्तमानसमाजस्य वर्तमानपद्धतेश्च सृष्टिरभवत्। बहुधा नूतनभावानां सृष्टिर्जाता, नानाविद्यानामालोचनमभूत्। एकः संघो भोगोपयोगिनो वस्तुजातस्य निर्माणं चकार,—हस्ताभ्यामथवा बुद्धचा। अन्यश्च संघस्तेषां भोग्यद्रव्यानां रक्षणं चकार। सर्वे मिलित्वा तत् सर्वं विनिमयेन गृह्णीतवन्तः, पुनर्मध्यतः कश्चन कुशलः संघ एतस्य स्थानस्य द्रव्यं तत्र नीत्वा नयनपारिश्रमिकस्वरूपेण सर्वेषां द्रव्याणां भूयांसं भागमात्मसात् कर्तुं शिक्षितवान्। एकः कर्षणं कृतवान्, एको रक्षितवान्, एकश्च प्रोढवान्, अन्यश्च कश्चित् क्रीतवान्। येन कर्षणं कृतं तेनाश्वडिम्बः प्राप्तः, येन रक्षितं तेन च बलात् कश्चनाग्रभागो गृहीतः। अधिकांशः खलु गृहीतो वैश्येन यस्तद् द्रव्यं समुह्य नीतवान्। यः क्रीतवान् स एतेषां सर्वेषां मूल्यं दत्त्वा मृतः!! रक्षकस्य नाम जातं राजेति, वाहकस्य नाम वणिगिति। द्वावप्येतौ संघौ न कर्म कृतवन्तौ, छलेनाग्रभागं गृहीतवन्तौ। यस्तु द्रव्यमुत्पादयामास स खलूदरे हस्तौ संस्थाप्य 'हा भगवन्' इति रुदन्नासीत्।

क्रमेण सर्वे एते भावाः संघर्षमापन्ना ग्रन्थिजालेन समुपेतास्ततश्चोत्पन्नो महाजटिलः समाजः। किन्तु पूर्वचिह्नं नापगतम्। ये खलु पूर्वस्मिञ्जन्मनि[६१] मेषचारणं कृतवन्तः, मत्स्यान् धृत्वा खादितवन्तस्त एव सभ्ये जन्मनि दस्यवो जलदस्यवो वा बभूवुः। वनं नास्ति येन मृगया सम्भवेत्, समीपे पर्वतादिकमपि नास्ति येन मेषचारणं सम्भवेत्। सभ्यं जन्म लब्धमिति मृगया-मेषचारण-मत्स्यग्रहणानामेकतमस्यापि न विद्यतेऽवकाशः। अतएव चानेन दस्युता चौर्यं वाश्रीयते, किं वाऽन्यत् स कुर्यात्? सा प्रातःस्मरणीयानां काले विद्यमाना कन्या,[६२] नास्मिञ्जन्मनि तथा बहवो वरा विवाहेन ग्रहीतुं शक्या इति सा वेश्या भवति। एवं नानाभङ्गिविशिष्टानां नानाभावसमन्वितानां सभ्यासभ्यानां देवासुराणां जन्मनां मानुषा मिलिताः सन्तः समाजं निर्मितवन्तः। अतः सर्वेषु समाजेषु नानारूपैर्भगवान् विराजमानः—साधुनारायणः, दस्युनारायण इत्यादिः। पुनर्यस्मिन् समाजे यादृशजनानां संख्याधिक्यं तस्य समाजचरित्रस्य तावदेव हि दैवत्वमासुरत्वं वा जातम्।

जम्बुद्वीपस्य कृतस्ना सभ्यता समुत्पन्ना समतले क्षेत्रे, उर्वरभूमौ, इयंचिकियंगङ्गा-सिन्धु-इउफ्रेटिसप्रभृतीनां महतीनां नदीनां तटे। सर्वासामासां सभ्यतानामादिर्भित्तिः खलु कृषिकर्म। सर्वास्ताः सभ्यता देवताप्रधानाः। इउरोपस्य

प्रायः सर्वाः सभ्यताः पर्वते समुद्रमये वा देशे समुत्पन्नाः। दस्युजलदस्यवो ह्येतासां सभ्यतानां भित्तिस्वरूपाः, एतास्वसुरभावः समधिकः।

वर्तमाने काले यावद् बोधगम्यं भवति तेन जम्बुद्वीपस्य मध्यभागस्तथाऽरब-मरुभूमिरसुराणां प्रधाना वसतिः। तस्मात् स्थानादेकत्रितं सद् मृगयापशुपालन-वृत्तिकमसुरकुलं सभ्यान् देवान् विताड्य कृत्स्नायां पृथिव्यां विस्तारयामास।

इउरोपखण्डवास्तव्या काचनादिभूता जातिरवश्यमासीत्। ते जनाः पर्वतगह्वरमध्युषितवन्तः, तेषु ये मनाग् बुद्धिमन्तस्ते गाधजले स्थूणां खनित्वा मञ्चं निर्माय तदुपरि गृहादिकं विरच्य वासं कुर्वन्त आसन्। अग्निप्रस्तरनिर्मितः शरः शूलफलकं छुरिका परशुर्वेत्यनेन कृत्स्नं कार्यं सम्पादितवन्तः।

## जातिद्वयस्य संघातः

क्रमेण जम्बुद्वीपस्य जनस्रोतः इउरोपस्योपरि निपतितम्। केषुचित् स्थलेषु सभ्यतराया जातेरभ्युदयोऽभूत्, रुशदेशान्तर्गतायाः कस्याश्चन जातेर्भाषा दक्षिण-भारतीयभाषायास्तुल्या।

किन्तु सर्वा एता जातयो बर्बरातिबर्बरावस्थायां स्थिताः। आशिया-माइनर् इत्यस्मात् कश्चन सुसभ्यो जननिवहः समीपवर्तिनि द्वीपपुञ्जे समुदितः, इउरोप-सविधवर्तिस्थानमधिकृतवान्, स्वेषां बुद्धया प्राचीनमिसरस्य साहाय्येन च काञ्चना-पूर्वां सभ्यतां सृष्टवान्। अस्माभिस्ते यवना इति, इउरोपीयैर्ग्रीका इत्यभिधीयन्ते।

पश्चाद् इतालिदेशे रोमक[८३]नामिकाऽन्या काचन बर्बरा जातिः इट्रास्कान्-[८४] नामिकामेकां सभ्यां जातिं पराजितवती, तेषां बुद्धिं विद्यां च संगृह्य स्वयं सभ्या जाता। क्रमेण रोमकाश्चतुर्दिशमधिकृतवन्तः, इउरोपखण्डस्य दक्षिणे पश्चिमे च भागे विद्यमाना यावन्तोऽसभ्या मनुष्यास्तेषां प्रजाः सञ्जाताः। केवलमुत्तर-भागे वने जङ्गले च बर्बरजातयः स्वाधीना आसन्। कालवशाद् रोमका ऐश्वर्य-विलासाद् दुर्बला बभूवुः। तदानीं पुनर्जम्बुद्वीपस्तस्यासुरसेनाम् इउरोपस्यो-परि निक्षिप्तवान्। असुरताडिता इउरोपस्योत्तरभागवर्तिनो बर्बरा रोम-साम्राज्यस्योपरि पतिताः! उत्सन्नो रोमकः। जम्बुद्वीपाद् विताडनेन मिलिताः खलु इउरोपस्य बर्बराः इउरोपस्य ध्वंसावशिष्टा रोमका ग्रीकाश्च, तेन चैकाऽभिनवा जातिरुत्पन्ना। अस्मिन् समये याहुदीजातिर्हि रोमकेण विजिता विताडिता च सती कृत्स्ने इउरोपखण्डे विस्तृता, सममेव च तेषां नूतनः खृष्टान-धर्मोऽपि विस्तारं गतः। एताः सर्वा विभिन्ना जातयः, मतानि, पन्थानः, नाना-विधानि चासुरकुलानि च महामायाया मूषायामहोरात्रं युद्धप्रहारादीनामग्निना द्रवीभूतं सद् मिश्रितम्। तस्मात् सृष्टैषा इउरोपीया जातिः।

हिन्दूनां कृष्णवर्णः, उत्तरदेशस्य दुग्धवत् सितवर्णः, कृष्णः पिङ्गलो लोहितः शुभ्रो वा केशः, कृष्णं पिङ्गलं नीलं वा चक्षुः, हिन्दुवन्नासिका मुखं चक्षुर्वा, अवनाट-मुखश्चैनिकः—एतासां सर्वासामाकृतीनां सम्मेलनेन काचन वर्बराऽतिवर्बरा वा इउरोपीया जातिः सृष्टा। कियत्कालं ते स्वयं प्रहारकर्तनादिकं कृतवन्तः, उत्तरदेशीयास्तु जलदस्युतामाश्रित्यावकाशलाभमात्रेण सभ्यतराणां जातीनामुत्-सादनं चक्रुः। मध्यतश्च खृष्टानधर्मस्य गुरुद्वयम्—इतालिदेशस्य पोपमहोदयः (फरासीभाषायाम् इतालिभाषायां च पाप् इत्युच्यते), पश्चिमायां दिशि च कन्स्टाण्टिनोपलस्य पाट्रियार्कमहोदयः—जन्तुतुल्यस्य वर्बरसंघस्योपरि राज-दम्पत्योश्चोपरि च प्रभुत्वमकरोत्।

इतश्चारवमरुभूमौ मुसलमानधर्मस्योदयोऽभूत्। वन्यपशुप्राय आरब एकस्य महापुरुषस्य प्रेरणया दुर्दमनीयेन तेजसाऽनाहतेन च बलेन पृथिव्या उपरि कृत-वानाघातम्। पश्चिमात् पूर्वाच्च प्रान्तादागतः स तरङ्ग इउरोपं प्रविवेश। तेन स्रोतोमुखेन भारतस्य प्राचीनग्रीसस्य च विद्या बुद्धिश्च इउरोपं प्रविष्टवती।

## तातार-जातिः

जम्बुद्वीपस्य मध्यस्थलात् सेलजुक-तातारारभिधेया"ऽसुरजातिर्मुसलमानधर्मं परिगृह्य आशिया-माइनर इत्यादीनि स्थानान्यधिकृतवती। आरवजातीया भारत-वर्षस्य जयार्थं बहुधा चेष्टित्वापि न सफला जाताः! मुसलनानाभ्युदयः कृत्स्नां पृथिवीं विजित्यापि भारतवर्षस्य समीपे कुण्ठितोऽभूत्। सिन्धुप्रदेशं सकृदा-क्रान्तवन्त इत्येव परन्तु तत्राधिकारो न स्थितः, तदनन्तरं न तथोद्यमः कृतः।

कतिभ्यः शतकेभ्योऽनन्तरं यदा तुर्कादयस्तातारजातयो बौद्धधर्मं विहाय मुसलमाना जातास्तदैते तुर्काः सममेव हिन्दु-पार्शी-आरबादीन् सर्वान् दासांश्चक्रुः। भारतवर्षस्य सर्वेषु मुसलमानविजेतृषु नैकोऽपि संघ आरबजातीयः पारस्यजातीयो वा, सर्वे तुर्कादितातारा:। राजपुतानाञ्चलस्य सर्वेषामागन्तुकमुसलमानानां नामानि तुर्क इति—तदेव सत्यमैतिहासिकं च। राजपुतानाखण्डस्य वन्दिना यद् गीतं 'तुरुगणस्य महद् बलम्'" तदेव यथार्थम्। कुतुब्उद्दिनादारभ्य मोगल-राजपर्यन्तं सर्वे ते तातारा: , या जातिस्तिब्बतीया सैव, केवलं मुसलमानधर्मं गृहीतवती, हिन्दुपार्शीप्रभृतींश्चोपयम्य चंक्रमुखस्य परिवर्तनं साधितवती, स एव प्राचीनोऽसुरवंशस्तेषाम्। अद्यापि काबुल-पारस्याख्य-कन्स्टाण्टिनोपलेषु सिंहासन-मारुह्य राजत्वं क्रियते तेनैवासुरेण तातारेण। गान्धार-पारस्यारबदेशीयास्तस्यैव तुरस्कस्य दासत्वमनुतिष्ठन्ति। विशालं चीनसाम्राज्यमपि तेषां माञ्चुर-

ताताराणां[७] पदानामधो विद्यते। माङ्गुना तु स्वधर्मो न त्यक्तः, स मुसलमानो न जातः, महालामा-महोदयस्य[८] शिष्यः सः। इयमसुरजातिः कस्मिन्नपि काले विद्याया बुद्धेर्वा चर्चां न करोति, केवलं युद्धं जानाति। तद्रक्तेन मिश्रणं विना युद्धवीर्यं न तथोत्पद्यते। इउरोपस्योत्तरभागे विशेषतो रुशदेशे यत् प्रवलं युद्धवीर्यं तत्रापि कारणं स तातारः। रुशजनस्य शोणितस्य चतुर्थांशत्रयं तातारस्य। देवासुराणां युद्धमधुनापि सुचिरं चलिष्यति। देवः खल्वसुरकन्यामुपयच्छति, असुरश्च देवकन्यां वलाद् गृह्णाति—एवमेव जातीनां प्रवलः सङ्करः समुत्पद्यते।

तातारगण आरवीयखलिफायाः सिंहासनमधिकृतवान्, खृष्टानानां महातीर्थं जिरुसालमप्रभृतीनि स्थानान्यधिकृत्य खृष्टानानां तीर्थयात्रां निवारयामास, वहून् खृष्टानान् निहतवान्। खृष्टानधर्मस्य गुरवः क्षिप्ता जाताः, कृत्स्ने इउरोपखण्डे विद्यन्ते तेषां बर्बराः शिष्याः, राजानं प्रजाश्च क्षिप्तानकुर्वन्, इउरोपीया बर्बरा गणशो जिरुसालम इत्यस्योद्धारार्थम् आशियामाइनरं गतवन्तः। केचन स्वयमेव परस्परं युद्धाघातादिभिर्मृताः, केचन रोगेण मृताः, शिष्टान् मुसलमाना हन्तुमारेभिरे। ते घोरवर्बराः क्षिप्ता जाताः—मुसलमाना यावतो निघ्नन्ति तावन्तः समायान्ति। सोऽयमारण्यकानां दुराग्रहः। स्वेषामेव गणे लुण्ठन्ति, खाद्याभावे सति मुसलमानान् धृत्वा खादन्ति। इंरेजराजस्य रिचार्ड्महोदयस्य मुसलमानमांसे विशेषेण रुचिरासीदिति प्रसिद्धिर्विद्यते।

वन्यमानुषस्य सभ्यमानुषस्य च युद्धे यद् भवति तदभूत्—जिरुसालम इत्यादीनामधिकारो न संघटितः। किन्तु इउरोपः क्रमेण सभ्यो भवन्नासीत्। चर्मपरिहिता आममांसभोजिनस्ते वन्या इंरेज-फरासीजार्मानादिकाः आशियादेशगतां सभ्यतां शिक्षमाणा आसन्। इतालिप्रभृतिषु स्थानेषु नागासेना[९] दार्शनिकं मतं शिक्षितुं प्रारेभे। खृष्टाननागाजनानां[१०] कश्चन संघो[११] दृढमद्वैतवेदान्ती सञ्जातः। अन्ततस्ते खृष्टानानुपहसितवन्तः, धनं च तेषां प्रभूतं संगृहीतमभूत्, तदा पोपस्य निर्देशाद् धर्मरक्षाव्याजेन इउरोपीया राजानस्तान् निहत्य धनं लुण्ठितवन्तः।

## सभ्यताद्वयस्य तुलना

इतश्च मूराभिधेया मुसलमानजातिः स्पानदेशे[१२] नितरां सुसभ्यं राज्यं स्थापितवती, नानाविद्यानां चर्चामकरोत्, इउरोपे प्रथमतया विश्वविद्यालयः संस्थापितः। इतालिदेशात् फ्रांस्देशात् सुदूराद् इंलण्डदेशादपि विद्यार्थिनो विद्यां शिक्षितु-

मागतवन्तः। राज्ञां राजपुरुषाणां च तनया युद्धविद्यामाचारं भङ्गीं सभ्यतां च शिक्षितुमागताः। प्रासादगृहद्वारदेवालयादयः सर्वे नूतनभङ्ग्या निर्मीयमाणा आसन्।

किन्तु समग्र इउरोपः कश्चन महान् सेनानिवासो जातः, विद्यते स भावोऽद्यापि। मुसलमाना कञ्चन देशं जितवन्तः, राजा तु स्वस्य कृते कञ्चन महान्तं भागं रक्षित्वा शिष्टं सेनापतिभ्यो विभज्य प्रदत्तवान्। करं न ते प्रदत्तवन्तः परन्तु राज्ञः प्रयोजने सत्येव सैन्यान्येतावन्ति प्रदेयानीति स्थितमासीत्। एवं हि सदोपकल्पितसेनारक्षणस्य भूयान् क्लेशो नासीदपि तु सति प्रयोजने समुपस्थास्यमाना प्रबला सेना प्रकल्पिताऽभवत्। अद्यापि राजपुतानाञ्चले स भावः कथञ्चिद् विद्यमानः, स च मुसलमानैरत्र देशे प्रवर्तितः। इउरोपीया मुसलमानानां भावमेतं गृहीतवन्तः। किन्तु मुसलमानानामासन् राजा, सामन्तगणः, सेना, शिष्टाश्च प्रजाः। इउरोपे तु राजा सामन्तगणश्चान्याः सर्वाः प्रजाः भृत्यप्रायाश्चकार। सर्वो मनुष्यः कस्यचन सामन्तस्याधिकृतो मनुष्यः सन्नेव जीवितः—आदेशमात्रेणैव सज्जेन सता प्रयाणार्थं समुपस्थातव्यम्।[११]

इउरोपीयसभ्यताख्यवस्त्रस्यैतान्युपकरणानि। अस्य वेमा—नातिशीतोष्णः पार्वत्यः समुद्रतटमयः प्रदेशः। अस्य तूलः—सर्वदा युद्धप्रियो बलिष्ठो नानाजातिमिश्रणेन समुत्पन्नो जातिसङ्करः। ओतमस्य—युद्धम्, आत्मरक्षार्थं धर्मरक्षार्थं च। यः खड्गं चालयितुं समर्थः स भवति महान्, यस्त्वसमर्थस्तेन स्वतन्त्रता विसर्जनीया, कस्यचन च शूरजनस्य खड्गस्याधः प्रोष्य जीवनं धारणीयम्। प्रोतमस्य—वाणिज्यम्। अस्याः सभ्यताया उपायः खड्गः, सहायो वीरत्वम्, उद्देश्यमैहिकः पारत्रिकश्च भोगः।

अस्माकं किं वक्तव्यम्? आर्याः खलु शान्तिप्रियाः, कृष्यादिकं कर्म कृत्वा शान्त्या स्त्रीपरिवारपालने समर्थश्चेत् सन्तोषमुपैति। तत्र श्वासग्रहणार्थमवकाशः प्रचुरो लभ्यते। अतश्चिन्ताशीलतायाः सभ्यतार्जनस्य च महानवसरः। अस्माकं जनकराजः स्वहस्तेन लाङ्गलं चालयति,स एव तत्कालस्य सर्वश्रेष्ठ आत्मतत्त्ववित्। ऋषिमुनियोगिनामभ्युदय आदितः। तैरादित एव ज्ञातं यत् संसारोऽयं तुच्छः। युद्धमनुष्ठीयतां लुण्ठनं वा, योऽयं भोगोऽन्विष्यते सोऽस्ति शान्तौ, शान्तिश्च शारीरिकभोगविसर्जने विराजते। भोगोऽस्ति मननशीलतायां बुद्धिचर्चायां च, शरीरचर्चायां नास्ति। जङ्गलापसारणरूपं तेषां कर्म सम्पाद्य तैस्तत्रादौ परिष्कृतायां भूमौ निर्मिता यज्ञवेदी, तस्मिन्निर्मले नभसि समुत्थितो यज्ञधूमः, तस्मिन् वायौ प्रतिध्वनितो वेदमन्त्रः, गवादयः पशवो निःशङ्कं चरितुमारेभिरे। विद्याया धर्मस्य चाधो निपातितः खड्गः। तस्यैकमेव कर्म धर्मरक्षा, मनुष्याणां गवादि-

पशूनां च परित्राणम्। आपदस्त्रायते यो जनान् स वीरः, स क्षत्रियः। धर्म एव लाङ्गलखड्गादीनां सर्वेषां रक्षकोऽधिपतिरभूत्। स राज्ञामपि राजा, निद्रितेऽपि जगति स एव सदा जागरूकः। धर्मस्याश्रये सर्वे स्वतन्त्रा आसन्।

इउरोपीयपण्डितैरुक्तम्—आर्याः कस्मादपि स्थानादुड्डीय भारतस्यारण्यकान् मनुष्यान् निहत्य निकृत्य भूमिं बलाद् गृहीत्वोषितवन्त इति। मूर्खाणामेवैतत् सर्वं वचः। अस्मदीयाः पण्डिता अपि तद्वत् समस्वरा दृश्यन्ते। सर्वं तद्विरूपं मिथ्यावचनं बालाः श्राव्यन्ते। असङ्गतमेतत् सर्वथा।

अहं मूर्खो मानुषः। यावज् जानामि तावतैव पारि-सभायां महान् प्रतिवादो मया समुत्थापितः। एतद्देशीयाः स्वदेशीयाश्च पण्डिता मया पृष्टाः। अवकाशे लब्धे पुनरपि संशयः समुपस्थापयिष्यत इत्याशंसे। भवद्भ्योऽप्येतद् वचनमुच्यते—यूयं पण्डिताः, ग्रन्थपत्रादिकमन्विष्य दर्शनीयम्।

इउरोपीया यस्मिन्नेव देशेऽवसरं लभन्ते तत्रैवादिमान् मनुष्यान् विनाश्य स्वयं सुखेन वसन्ति, अत आर्यैरपि तदेव कृतम्!! ते यायावरा अन्नाभावाद् रुदन्तः कान् नाम जनान् लुण्ठिष्यन्ति हनिष्यन्तीति भ्रमन्त आसते, अत आर्यैरपि तदेव कृतम्!! उच्यतां कुत्र प्रमाणं लब्धम्—ऊहः? भवद्गृह एव स्थापयितव्यः स ऊहः।

कस्मिन् वेदे कस्मिन् सूक्ते कुत्र दृष्टं यदार्यैर्विदेशादत्रागतम्? कुत्र लब्धं यत्तैरारण्यका निहत्य निकृत्य निक्षिप्ताः? अकारणं मूर्खतया किम्? वृथैव भवतां रामायणपठनम्, अकारणं रामायणस्योपरि काचन वृहती कथा कथमारोप्यते?

अहो रामायणं खल्वार्यैर्दाक्षिणात्यारण्यकानां विजयः!! किमेतत्? आर्यो राजा रामचन्द्रः सुसभ्यः, युध्यते केन सह?—लङ्काराजेन रावणेन सह। रामायणमधीत्य ज्ञायतां यदसौ रावणः सभ्यतायां रामचन्द्रस्य देशादुत्कृष्ट आसीत्, नापकृष्टः। लङ्कायाः सभ्यताऽयोध्यातो वरमधिकासीत्, किन्तु न न्यूना कथमपि। ततो वानरादिदाक्षिणात्या विजिताः कुत्र? ननु ते सर्वे श्रीरामचन्द्रस्य बन्धवो मित्राणि वासन्। कस्य नाम गुहकस्य, कस्य वा वालिराजस्य राज्यं रामचन्द्रेण बलाद् गृहीतमित्युच्यतां खलु।

स्यादेवं यद् द्वित्रेषु स्थानेषु वन्यानामार्याणां च युद्धमभूत्, स्याच्च यत् केचन धूर्ता मुनयो राक्षसानां जङ्गलस्यान्तो यज्ञाग्निं प्रज्वल्योपविष्टा आसन्। छलमाश्रित्य चक्षुर्द्वयं निमिष्य समासीनाः कदा राक्षसैरिष्टकाद्यस्थ्यादिकं वा निक्षिप्यत इति। यदैवास्थिप्रभृति निक्षिप्तं तदैव नासाक्रन्दनमवलम्ब्य राज्ञां समीपं गतम्! राजान आयसं वक्षस्त्राणं परिधाय, आयसमस्त्रं शस्त्रं च गृहीत्वाऽश्वमारुह्य समागताः। कियन्तं वा कालं वन्यैरस्थिप्रस्तरदण्डादिभिर्युद्धं करिष्यते?

राजानो निहत्याहत्य प्रचलिताः। स्यादेवं किन्त्वेतस्मिन्नपि वन्यानां वनं बलाद् गृहीतमिति कुत्र लभ्यते ?

अतिविशालं नदनदीपूर्णमुष्णप्रधानं समतलं क्षेत्रमार्यसभ्यताया वेमा। आर्यप्रधानो वहुविधः सुसभ्योऽर्धसभ्योऽसभ्यो वा मनुष्यगणोऽस्य वस्त्रस्य तूलः। ओतमस्य वर्णाश्रमाचारः, प्रोतञ्च प्राकृतिकद्वन्द्वसंघर्षनिवारणम्।

त्वम् इउरोपीयः कस्य नाम देशस्य कदा श्रेयो विहितं भवता ? आपेक्षिकतयाऽवनतां जातिमुत्तोलयिष्यसीति तव शक्तिः कुत्र ? यत्र दुर्बला जातिर्लब्धा तत्र तेषां समूलमुत्सादनं कृतम्, तेषां भूमौ युष्माभिर्वासः क्रियते, ते च सर्वथा विनष्टाः। युष्माकमामेरिकाया इतिहासः कीदृशः ? युष्माकम् अस्ट्रेलिया-निउजिलण्ड- प्रशान्तमहासागरीयद्वीपपुञ्जानां युष्माकम् आफ्रिकाया वा कीदृशः सन्देशः ?

कुत्र गतास्ता वन्या जातयोऽद्य ? कार्त्स्न्येन ध्वंसः, वन्यपशुवदेव ते युष्माभिर्निहताः, यत्र युष्माकं शक्तिर्नास्ति केवलं तत्रैवान्या जातयो जीविताः।

भारतवर्षं पुनः कस्मिन्नपि काले तन्न कृतवत्। आर्या नितरां दयालवो वभूवुः। तेषामखण्डसमुद्रतुल्ये विशाले हृदये, अमानवप्रतिभासम्पन्ने मस्तिष्के सा सर्वाऽपातरमणीया पाशवप्रणाली कस्मिन्नपि काले न स्थानं लेभे। स्वदेशीयमूर्ख ! यद्यार्या वन्यान् निहत्याहत्य वसेयुस्तदास्य वर्णाश्रमस्य सृष्टिः स्याद्वा ?

इउरोपस्योद्देश्यं यत् सर्वान् विनाश्य वयं जीविताः स्याम। आर्याणामुद्देश्यं सर्वानस्माभिस्तुल्यान् कुर्मः, अस्मदपेक्षयोन्नतान् कुर्मः। इउरोपस्य सभ्यताया उपायः खड्गः, आर्याणामुपायो वर्णविभागः। शिक्षायाः सभ्यतायाश्च स्तरमनुसृत्य सभ्यताशिक्षायाः सोपानं वर्णविभागः। इउरोपे वलवतां जयो दुर्बलानां मृत्युः। भारतवर्षस्य सर्वः सामाजिको नियमो दुर्बलानां रक्षार्थम्।

## परिशिष्टम्[१४]

सभ्यताया उन्नतिरिति[१५] यदर्थम् इउरोपीयैरेतावान् गर्वोऽनुभूयते तस्यार्थः कीदृशः ? तस्यायमर्थः—उद्देश्यसिद्धिः, अनुचितमप्युपायमुचितत्वेन सन्दर्शयति। चौर्यं मिथ्याभाषणं मृत्युदण्ड इत्यादीनां सर्वेषामौचित्यं विधीयते। क्षुधार्ताः सहगामिनो मुसलमानरक्षिण ग्रासपरिमितमन्नमचोरयन्निति स्टानलिना[१६] तान् प्रति वेत्राघातः कृत इत्यस्याप्यौचित्यं विधीयते। "दूरमपसर, अहं तत्रागन्तुमिच्छामि" इतीयं प्रसिद्धा इउरोपीया नीतिरपि समुचितेति विधीयते। भूयांसो

दृष्टान्ता विद्यन्ते यद् यत्रैव इउरोपीयानामागमनं तत्रैवादिमजातेर्विनाशः। लण्डननगर्यां व्यभिचारं, पारिनगर्यामसहायस्त्रीपुत्रादीनां परित्यागेन पलायनमात्म-हत्यां च सामान्यं धृष्टतामात्रमिति चिन्तयति—एतद्धि सभ्यताया अग्रसरणम्।

आदिशतकत्रये इसलामधर्मेण यथा क्षिप्रं सभ्यताविस्तारः कृतस्तेन सह खृष्टानधर्मस्यादिभूतं शतकत्रयं तुलनीयम्। खृष्टानधर्म आद्ये शतकत्रये जगतो पुरत आत्मानं परिचितमपि कर्तुं नाशक्नोत्, यदा तु कनस्टाण्टाइन[९७] इत्याख्यस्य सम्राजः खड्गो धर्ममेतं स्वराज्ये संस्थापितवांस्तस्माद् दिवसात् खृष्टानधर्म आध्या-त्मिकीं वा सांसारिकीं वा सभ्यतां प्रसारयितुं किं नाम साहाय्यं कृतवान्? यः खलु इउरोपीयः पण्डितः प्रथमतया प्रमाणितवान् यदियं पृथिवी सचला तस्मै कीदृशः पुरस्कारः प्रदत्तोऽनेन खृष्टानधर्मेण? को वा वैज्ञानिकः कस्मिन् काले खृष्टानधर्मेणानुमोदितः? खृष्टानसंघस्य साहित्यं किं सम्पद्विज्ञानस्यापराध-विज्ञानस्य वा, शिल्पकौशलस्य पण्यकौशलस्य वाऽभावं पूरयितुं समर्थम्? अद्यापि 'चर्च' इत्यनेन 'प्रोफेन'साहित्यस्य (धर्मेतरविषयमवलम्ब्य लिखितस्य) प्रचारे-ऽनुमतिर्न दीयते। यस्य मनुष्यस्य विद्यायां विज्ञाने वा प्रवेशोऽस्ति किं तेनाद्या-कृत्रिमेण खृष्टानेन भवितुं शक्यम्? निउ टेस्टामेण्ट[९८] इत्यस्मिन् प्रत्यक्षतया परोक्षतया वा कस्यापि विज्ञानस्य शिल्पस्य वा प्रशस्तिर्नास्ति। परन्तु नास्त्ये-तादृशं विज्ञानं शिल्पं वा यत् प्रत्यक्षतया परोक्षतया वा कोरानस्य हृदिसस्य वा बहुभिर्वाक्यैर्नानुमोदितमुत्साहितं वा। इउरोपस्य प्रधाना मनीषिणो यथा भल्टेयर, डारउइन,वुकनार, फ्लमारिअँ, भिक्टर-हुगो इत्यादयो वर्तमाने काले खृष्टानधर्मीयैरपभाषिता अभिशप्ताश्च। प्रत्युत सर्व एते पुरुषा इसलामधर्मीयै-रास्तिका मन्यन्ते, मन्यन्ते च यदेतेषां केवलं पयगम्बरे विश्वासो नास्तीति। धर्माणा-मुन्नतौ वाधकत्वं साधकत्वं च विशेषेण परीक्ष्यतां नाम, द्रष्टव्यं यद् इसलामेन यत्र गतं तत्रैवादिमा निवासिनो रक्षिताः। ताः सर्वा जातयस्तत्र विद्यमानाः। तेषां जनानां भाषा च जातीयत्वं चाद्यापि विद्यमानम्।

खृष्टानधर्मेण कुत्रैतद् दर्शयितुं शक्यते? स्पेनदेशीया आरवाः कुत्र, कुत्र वा गता अस्ट्रेलियाया आमेरिकाया वाऽदिमा निवासिनः? खृष्टानैः इउरोपीया याहुदीजना अद्य कीदृशीं दशां प्रापिताः? केवलं दानविषयिणीं कार्यप्रणालीं व्यतीत्य इउरोपस्य न कापि कार्यपद्धतिः गस्पेल[९९]स्यानुमोदिता किन्तु गस्पेलस्य प्रतिकूलतया समुत्थिता। इउरोपे या काप्युन्नतिः संघटिता तत्र सर्वत्र खृष्टान-धर्मस्य प्रतिकूलं विद्रोहमाश्रित्य। इउरोपे यद्यद्य खृष्टानानां शक्तिः स्यात्तर्हि पास्तेर[१००] -कक[१०१] तुल्यान् वैज्ञानिकान् जीवंत एव ते ज्वलयेयुः, डारउइन-कल्पां शूले समारोपयेयुः। वर्तमाने इउरोपे खृष्टानधर्मः सभ्यता च पृथगेव। अधुन

सभ्यता हि तस्याः प्राचीनस्य शत्रोः खृष्टानधर्मस्य विनाशाय धर्मयाजककुलस्योत्सादने तेषां हस्तेभ्यो विद्यालयानां दातव्यालयानां बलाद् ग्रहणे कटिबद्धा सञ्जाता। यदि मूर्खाणां कृषकाणां संघो न विद्येत तर्हि खृष्टानधर्मस्तस्य घृणितमस्तित्वं क्षणमपि न सन्धारयितु समर्थः स्यात्, समूलमुत्सादितश्च स्यात्, यतो नगरवासी दरिद्रगणोऽधुनैव खृष्टानधर्मस्य प्रकाश्यः शत्रुः! तुलनीयश्चानेन इसलामधर्मः। मुसलमानदेशे सर्वा हि पद्धतिः इसलामधर्ममाश्रित्य संस्थापिता, तद्धर्मस्य शिक्षकाः सर्वेषां राजपुरुषाणां बहुधा पूजिताः, धर्मान्तराणां शिक्षका अपि सम्मानिताः।

अधुना पाश्चात्त्ये देशे श्रीसरस्वत्योः सममेव कृपा दृश्यते। केवलं भोग्यप्राप्त्या न ते तृप्ताः, किन्तु सर्वेषु कर्मसु ते मनाक् श्रियमाकाङ्क्षन्ति। भोजनादिषु गृहकक्षादिषु च सर्वत्र काञ्चन शोभां द्रष्टुं ते वाञ्छन्ति। अस्मद्देशेऽप्येकदा यदा धनमासीत्तदा स भावोऽप्यासीत्। अधुना दारिद्रचमेकतः, तस्योपरि वयमितो भ्रष्टास्ततो नष्टाश्च। जातीयगुणा ये केचनासंस्तेऽपि गच्छन्ति—पाश्चात्त्यदेशस्यापि न किञ्चिल्लभ्यते! चलनासनभाषणेषु या प्राचीना रीतिरासीत् सा गता, पुनः पाश्चात्त्यरीतेर्ग्रहणेऽपि सामर्थ्यं नास्ति। पूजापाठादिकं यत् किञ्चिदप्यासीत्तत् सर्वमस्माभिर्वन्याया जले निक्षिप्यते, अथ च कालोपयोगि नूतनमपि किञ्चन नोद्भूय सन्तिष्ठति, मध्यरेखायामस्माकं निपतनाद् वयमद्य दुर्दशामापन्नाः।

भविष्यद्वङ्गदेशो नाद्यापि स्वपदोपरि स्थितः। विशेषेण दुर्दशा खलु शिल्पस्य। प्राचीना वृद्धा गृहकक्षादिष्वालेपनं प्राददुः, भित्तौ विचित्रचित्रादिकमङ्कितवत्यः। रम्भापत्रं वैचित्र्येण कर्तितवन्तः, भोजनादिके विषये सज्जा खलु समाश्रीयत बहुविधं शिल्पचातुर्यमवलम्ब्य, शीघ्रमेव तस्य सर्वस्यावसानं च जातं जायते च!! नूतनमवश्यं शिक्षणीयं करणीयं च किन्तु तदर्थं किं पुरातनानां जले प्लवनं स्यात्? न हि नूतनलेशोऽपि शिक्षितः, केवलं वाक्यविन्यासमात्रम्। कर्मोचिता विद्या का नाम शिक्षिता? विदूरे पल्लीग्रामेऽधुनापि विद्यमानं पुरातनं काष्ठकर्म, इष्टककर्म च; तत्र गत्वा दर्शनीयम्। कलिकातायाः सूत्रधरस्तु द्वारयुगलमपि न निर्मातुं समर्थः। द्वारं वाऽर्गलं वेति न बोधगम्यं भवति!!! सूत्रधरत्वं हि विद्यते केवलं विदेशीययन्त्रक्रये!! इयं समवस्था सर्वस्मिन् विषये समुपस्थिता। यत् स्वकीयमासीत्तत् सर्वं गमनोन्मुखम्, अथच विदेशीयशिक्षायाः केवलं वाक्ययन्त्रणा वर्तते!! केवलं ग्रन्थ एव पठयते! अस्मासु वङ्गीयास्तथा इउरोपे आइरिशजनाः—समस्वभावमेतज्जातिद्वयम्। केवलं वाग्विस्तरः क्रियते। वक्तृत्वे जातिद्वयमेव नितरां पटु। कर्माणि न किञ्चिदपि, आधिक्यमत्र यन्मिथस्ते नक्तन्दिवं कलहपरायणाः सन्तो म्रियन्ते!!!

परिष्कृतस्य सुसज्जितस्य देशस्यास्य (पाश्चात्त्यस्य) ईदृशोऽभ्यासो यदति-दरिद्रस्यापि तत्र दृष्टिर्विद्यते। प्रयोजनवशादेव तत्र दृष्टिः स्यात्—परिष्कृतं वस्त्रं विना तस्मै न किमपि कर्म केनापि न्यस्यते। भृत्यस्य भृत्यायाः पाचकस्येति सर्वेषां सुशुक्लं वस्त्रमहोरात्रम्। गृहं द्वारं च धूल्यपसारणेन घर्षणेन मार्जनेन च सुसज्जितम्। एतेषां प्रधानं शिष्टत्व[102]मेतद् यद् यत्र तत्र यत् किमपि न प्रक्षेप्तव्यम्! पाकगृहं सुपरिष्कृतम्—त्वग् वल्कं वा यत् प्रक्षेपणीयं तत् कस्मिंश्चन पात्रे निक्षिप्यते, अनन्तरं ततो दूरं नीत्वा प्रक्षेपणं करिष्यते। चत्वरेऽपि न निक्षिप्यते, नापि रथ्यायाम्।

येषां धनमस्ति तेषां गृहकक्षादिकं दर्शनीयमेव—अहर्निशं सर्वं सुपरिष्कृतम्! तदतीत्य देशीयं विदेशीयं च नानाविधं शिल्पद्रव्यं संगृहीतम्! नास्माकमधुना तेषामिव शिल्पसंग्रहेण कृत्यमस्ति, किन्तु यान्युत्सीदन्ति तेषां (रक्षार्थं) स्वल्पो यत्नः कर्तव्य उत न? यथा तेषां चित्रविद्या भास्कर्यविद्या वा विद्यते तथास्माकं भविष्यतीति सुदूरं पराहतम्! एतस्मिन् कर्मद्वये वयं चिरमेवानिष्णाताः। अस्माकं देवो देवी च दर्शनीयौ, जगन्नाथदर्शनादेवाव-गन्तव्यम्!! महता यत्नेन तेषाम् (इउरोपीयानाम्) अनुकरणेनैको द्वौ वा रविवर्मा जायते!! ततोऽपि श्रेयान् स्वदेशीयश्चित्रितः पटः—तेषां कर्मणि परि-ष्कृतत्वं वर्णस्य चौज्ज्वल्यं विद्यते। चित्रितपटसन्दर्शनेन रविवर्मादिभि[103]र्लज्जया शिरोऽवनम्यते!! जयपुरस्य स्वर्णाभं चित्रणं दुर्गादेव्या मूर्तेः पश्चाद् विद्यमानस्य पटस्य च चित्रणं वरम्। इउरोपीयभास्कर्यचित्रादिकमधिकृत्य यद् वक्तव्य-मस्ति तत् पश्चादेव सोदाहरणं वक्ष्यते। स चैकः प्रकाण्डो विषयः।

इति विद्वत्समाजशिरोभूषणमहामहोपाध्याययोगेन्द्रनाथश्रीचरणान्तेवासिना पण्डितप्रवरश्रीमदानन्दगोपालगोस्वामिदेवशर्मणस्तनुजेन संस्कृतशिक्षाकेन्द्रभूत-नवद्वीपधामवास्तव्येन श्रीविष्णुप्रियापरिवारसम्भूतेन माधवाचार्यवंशजेन सीतानाथदेवशर्मणा कृतः स्वामिविवेकानन्दरचितस्य 'प्राच्य ओ पाश्चात्य'-ग्रन्थस्यानुवादः समाप्तः।

———

# टिप्पनी

क्रमिक-
संख्या पृष्ठा

१ १२ गयासुरो बुद्धश्चाभिन्न इति स्वामिपादानां मतं पश्चात् परिवर्तितम्। तनुत्यागात् कियदेव पूर्वं काशीधाम्नः कञ्चन शिष्यं प्रति यत् पत्रं लिखितं तस्मिन्नुक्तम्—अग्निपुराणे गयासुरमाश्रित्य यदुल्लिखितं तत्र (डः राजेन्द्रलाल-मित्रमहोदयमतवत्) बुद्धदेवो नाभिहितः, तत्तु केवलं प्राचीनकालात् प्रचलितं किञ्चनोपाख्यानम्।....बुद्धो गयशीर्षपर्वतं गतवांस्तत्र निवस्तुमित्यनेनैव सिध्यति यत्तत् स्थानं प्राचीनकालादेव विद्यमानमासीत्।

२ १३ गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥
नाततायिवधे दोषो हन्तुर्भवति कश्चन।
प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति॥
(मनुसंहिता ८।३५०-५१)

के नामाततायिन इत्य टीकायां मेधातिथिनोक्तम्—
उद्यतासिर्विषाग्निभ्यां शापोद्यतकरस्तथा।
आथर्वणेन हन्ता च पिशुनश्चापि राजतः॥
भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः।
एवमाद्यान् विजानीयात् सर्वानेवाततायिनः॥

उक्तं च शुक्रनीतौ—
अग्निदो गरदश्चैव शस्त्रोन्मत्तो धनापहः।
क्षेत्रदारहरश्चैतान् षड् विद्यादाततायिनः॥(३।४०)

अयमेव श्लोको बहुत्रान्यथा समुद्धृतो दृश्यते—
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारापहारी च षडेते ह्याततायिनः॥ इति

क्रमिक-
संख्या पृष्ठा

३ १३ अर्थवादानां प्रामाण्यं नास्तीति पूर्वपक्षोऽनेन सूत्रेण समुत्थापितः। तस्यायमर्थः—सर्वस्यैव वेदस्य क्रियाप्रतिपादकत्वादक्रियाप्रतिपादकस्य वेदभागस्यार्थवादस्य न प्रामाण्यम्। 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'न कलञ्जं भक्षयेत्' इत्यादिके विधौ निषेधे वा काचन क्रिया प्रतिपाद्यत इत्येतादृशानां वाक्यानां प्रामाण्यमस्ति। परन्तु सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वमित्यादिकमर्थवादवाक्यं क्रियां न प्रतिपादयतीति न तस्य प्रामाण्यमिति पूर्वपक्षाशयः। (जैमिनिसूत्रम् १।२।१)

४ १३ ॐकारध्यानेन सर्वार्थसिद्धिर्भवतीत्यत्र प्रमाणमुच्यते—

सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्॥
एतद्ध्येवाक्षरं ब्रह्म] एतद्ध्येवाक्षरं परम्।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥
(कठोपनिषद् १।२।१५-१७)

५ १३ हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः॥
अपि च—स्तेनः सुरापो मित्रध्रुग् ब्रह्महा गुरुतल्पगः।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः॥
(श्रीमद्भागवतम् ६।२।९-१०)

६ १३ सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ (गीता १८।६६)

७ १३ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥ (गीता १८।६१)

८ १४ धर्मका[मो] धर्ममाचरति तेन च स्वर्गादिफलं लभते, भोगक्षयानन्तरं पुनस्तस्य संसारगतिः। परन्तु मोक्षकाम ऐहिकं पारत्रिकं च सर्वविधं फलं तुच्छीकृत्य कर्म परित्यजति, कामनारहितः सन् विहितं नित्यकर्म समाचरति वा चित्तशुद्ध्यर्थम्॥

क्रमिकसंख्या पृष्ठ।

तेन चेहामुत्रफलभोगविरागोऽवश्यमर्जनीयः। तथा च श्रूयते—
तद् यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः
क्षीयते। (छाः उः ८।१।६)

९ १४ अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी॥ (गीता १२।१३)
इत्यारभ्य द्वादशाध्यायसमाप्तिपर्यन्तं श्लोकाः
(१२।१३-१२।२०) द्रष्टव्याः।

१० १४ क्लैव्यं मास्म गमः पार्थ नैतत्त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्वल्यं त्यक्त्वोत्तिष्ठ परन्तप॥ (गीता २।३)

११ १४ तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम्।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्॥
(गीता ११।३३)

१२ १४ श्रीमद्भगवद्गीतायाश्चतुर्दशेऽध्याये गुणत्रयविभागः
समालोचितः। तत्रैतेषु श्लोकेषु विशेषेण गुणत्रयस्वरूपं प्रति-
पादितम्—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।
निवध्नन्ति महावाहो देहे देहिनमव्ययम्॥
तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ॥
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम्॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत॥ (१४।५-८)

अत्र मनुसंहितायाः केचन श्लोका अपि द्रष्टव्याः—

वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः।
धर्मक्रियात्मचिन्ता च सात्त्विकं गुणलक्षणम्॥
आरम्भरुचिताधैर्यमसत्कार्यपरिग्रहः।
विषयोपसेवा चाजस्रं राजसं गुणलक्षणम्॥
लोभः स्वप्नोऽधृतिः क्रौर्यं नास्तिक्यं भिन्नवृत्तिता।
याचिष्णुता प्रमादश्च तामसं गुणलक्षणम्॥
(१२।३१-३३)

क्रमिकसंख्या पृष्ठा

१३ १४ सम्पूर्णः श्लोकः खल्वेवम्—

एकभूरुभयोरेकदलयोरेककाण्डयोः।
शालिश्यामाकयोर्भेदः फलेन परिचीयते ॥]

१४ १५ 'उल्टा समझलि ;राम' इति हि मूले दृष्टम्। तस्याक्षरिकोऽनुवादः—हे राम , त्वया विपरीतमेवावगतम्। भोजपुरीभाषायामुपनिबद्धोऽयमाभाणक इति मन्यामहे। भक्तानां पुरो यदा कश्चन प्रवक्ताऽऽचार्यो व्याख्यानं करोति किन्तु केनचन भक्तेन तन्नावगम्यते, विपरीतमेव च तेन गृह्यते तदासौ प्रवक्ता दुःखेन कथयति—'अहो राम (हे राम, भक्त इत्यर्थः) त्वया विपरीतमवगतम्' इति।

अत्र विद्यते काचनाख्यायिका—कश्चन साधुरत्यर्थं चलन् परां क्लान्तिमुपागमत्। श्रीरामचन्द्रमुद्दिश्य प्राह सः—हे राम, मह्यं कश्चनाश्वः प्रदेय इति। योधानामेको यूथः खलु तत्रैवाश्वारोहणेन सम्प्राप्तः। दैववशात् तत्रैव काचन गर्भवती सुषुवे कञ्चनाश्वशावकम्। तस्य शावकस्य वहनार्थं ते सादिनः साधुमिमं नियोजयामासुः। दुःखादुवाचायं साधुः—हे राम, विपरीतं त्वयाऽवगतम्। आरोहणार्थं प्रार्थितोऽश्वः, परन्तु प्राप्तः सोऽश्वो मया तस्य वहनार्थम्!

१५ १५ नलिनीदलगतजलमतितरलं तद्वज्जीवनमतिशयचपलम्।
क्षणमिह सज्जनसङ्गतिरेका भवति भवार्णवतरणे नौका ॥
—शङ्कराचार्यकृते द्वादशपञ्जरिकास्तोत्रे दशमः श्लोकः।

१६ १५ वङ्गभाषीयसंस्करणेषु 'कुमारिल्ल' इति पाठो दृश्यते, 'कुमारिल' इति ज्ञेयम्।

१७ १६ स्वधर्मं जातिधर्मं वा समाश्रित्य यदत्रोक्तं तस्य मूलं हि गीताया अष्टादशाध्यायः। उद्ध्रियन्ते च ते श्लोकाः—

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥

क्रमिकसंख्या पृष्ठा

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥
स्वे स्वे कर्मण्यभिरतः संसिद्धि लभते नरः ।
स्वकर्मनिरतः सिद्धि यथा विन्दति तच्छृणु ॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धि विन्दति मानवः ॥
ेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥
(गीता १८।४१-४७)

तदर्थप्रतिपादका मनक्तश्लोका अपि द्रष्टव्याः —
अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत् ॥
प्रजानां रक्षणं दानमिज्याध्ययनमेव च ।
विषयेष्वप्रसक्तिञ्च क्षत्रियस्य समासतः ॥
पशनां रक्षणं दानमिज्याध्ययनमेव च ॥
वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च ॥
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ (मनु० १।८८-९१)

१८ १६ गीता ३।२४

१९ १६ ग्रन्थस्याष्टादशे संस्करणे यथा विराम-चिह्नं विद्यते तेनार्थबोधः सुकरो भवति। चिह्नराहित्य तु संशयावसरोऽस्ति। इंरेजीभाषान्तरीकरणस्य षष्ठे मुद्रणे यद् विद्यते तत्तु मूलाद् भिन्नमेव। एवमेव हिन्दीभाषीयसंस्करणेऽप्यन्यथा व्याख्यातम्। सन्दर्भस्यास्य कोऽर्थ इति विद्वद्भिर्निर्णेयम्।

२० १८ अत्र प्रथमचार्लस् इति इंलण्डीयो नृपतिरभिधीयते।

२१ १८ जाहाङ्गीर-शाजाहाननामकयोर्नृपयोर्जनन्यौ राजपुतवंशीये आस्ताम्। परन्तु दाराशेकोनामकस्य मोगलराजपुत्रस्य जननी मुसलमानधर्मीयाऽसीदिति तदानीन्तनेतिवृत्ताध्ययनाल्लभ्यते। आकवरनरपतिरम्बरराजस्य विहारिमलस्य दुहितरं मर्यम्-उज़्-ज़मानि इति नामधेयामुपयमे। ताभ्यामेव जातः सलीम् जाहाङ्गीरो वा। मर्यम्-उज़्ज़मानि इति न

क्रमिकसंख्या पृष्ठा

हिन्दुनाम, परन्तु विवाहोत्तरमभिधानम्। विवाहपूर्वकालीनं नाम तु न ज्ञायते।

जाहाङ्गीरोऽपि उदयसिंहनामकस्य 'मोटाराजा' इत्यभिहितस्य कन्यां योधाबाई इत्याख्यामुपयमे। एताभ्यामेव मातापितृभ्यां जातः खुर्रम् शाजाहानो वा।

परन्तु शाजाहानस्य पुत्रो दाराशेको न हिन्दुजनन्यास्तनयः। आसफ् खान् इति ज्ञातस्य इतिक़ाद् खान् इति नामधेयस्य कन्यया अर्जुमाण्ड् बानु इत्यभिधया सह शाजाहानस्य विवाहः समजनि। तयोरेव पुत्रो दाराशेको कथं नाम हिन्दुजननीतः समुत्पन्नः स्यादिति चिन्त्यम्।

२२ १८ इदमेव तत्त्वं वैदेशिकैरपि बहुभिरितिवृत्तलेखकैः स्वीकृतम्। तथा चोद्ध्रियते— "Akbar contracted his marriages in a different spirit, and accepted his Hindu male connexions as members of the royal family. No pressure was put on the princes of Amber, Marwar, or Bikaner to adopt Islam, and they were freely entrusted with the highest military commands and the most responsible administrative offices. That was an entirely new departure, due to Akbar himself, not to Abul Fazl or another. The policy afforded the strongest support to the throne in the reigns of Akbar and his son, and continued to bear fruit even in the reigns of his grandson, Shahjahan, and his great-grandson, Aurangzeb. But Aurangzeb's ill-judged policy of worrying Hindus gradually estranged the Rajput chieftains and largely contributed to the rapid dissolution of the empire which occurred after his death." (Oxford History of India, V. A. Smith, P. 358, 3rd edition.)

२३ १८ उद्ध्रियते च स्मिथ्-महोदयलिखितादितिवृत्तग्रन्थात्—"And then came the greased cartridges. The cartridges for the new Enfield rifle were said to be smeared with the fat of cows and pigs, thus

क्रमिकसंख्या पृष्ठा

nicely outraging the feelings of both Hindus, to whom the cow was sacred, and Muslims, to whom the pig was unclean. The story spread life wildfire and was denied vigorously and in good faith by the officers. But animal fat had in fact been used in the Woolwich arsenal, so that the denial only confirmed the *Hindu Soldiers*' belief that some plot was afoot."—(ibid, Pp 666-7.)

२४ १८ ग्रन्थस्यास्य त्रिंशे तथैकत्रिंशेऽध्याये विस्तरेण समालोचितमेतत्। तथापि दिग्दर्शनस्वरूपेण तस्माद् ग्रन्थादंशविशेषा उद्ध्रियन्ते —

(क) "The fears and antagonism of the Brahmins being thus aroused, it was natural that they should wish to see our rule upset, and they proceeded to poison the minds of the people with tales of the Government's determination to force Christianity upon them, and to make them believe that the continuance of our power meant the destruction of all they held most sacred."—Fortyone years in India by Field Marshal Lord Roberts of Kandahar, vol. I, Ch. xxx, P. 417.

(ख) "It is certain that, however well disposed as soldiers the men in our ranks may be, their attitude will inevitably be influenced by the feelings of the people generally, more especially should their hostility be aroused by any question connected with religion."—ibid, Ch. xxxi, P. 439.

(ग) The Government of India should, no doubt, be progressive in its policy, and in all things be guided by the immutable principles of right. truth and justice ; but these principles ought to be applied, not necessarily as we should apply them in England, but with due regard to the social peculiarities and religious

क्रमिकसंख्या पृष्ठा

prejudices of the people whom it ought to be our aim to make better and happier."—ibid, P. 448.

२५ १८ सन्दर्भोऽयं कठोपनिषदः कञ्चन मन्त्रं स्मारयति। तथा हि—

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥(२।२।९)

२६ १९ बुद्धिहीना मेषा न कथमपि कार्यकारणसम्बन्धं ज्ञात्वा प्रवर्तन्ते परन्तु तेषां मध्ये यः खल्वग्रवर्ती तस्यैवाचरणमनुकृत्य प्रचलन्ति। ईदृगन्धानुकरणमेव गड्डरिका-प्रवाह इत्युच्यते।

वस्तुतस्तु मूले 'भेड़ियाधसान' इति विद्यते। हिन्दी-भाषायां भेड़शब्दस्य मेषार्थकत्वम्। भेड़िया—मेष इवेत्यर्थः। 'घसान' इत्यस्यार्थः—जनाकीर्णे स्थाने गात्रसंस्पर्शेन बलादग्रगमनम्। तच्च मेषैरज्ञात्वैव कार्यकारणादिकमबुद्धिपूर्वकं मूढवदनुष्ठीयत इति गड्डरिकाप्रवाह एवास्य हिन्दीशब्दस्यार्थः।

२७ २० गोरस गलिगलि फिरे, सुरा बैठि बिकाय—इत्येकः पद्यांशः। तत्र च्छन्दोऽनुरोधेन 'सुरा' इत्यस्य स्थाने 'मदिरा' इति शब्दो योजयितुं शक्यः। हिन्दीसंस्करणे 'गलीगली है गोरस फिरता' इति यद् दृश्यते तत्र 'है' 'फिरता' इति शब्दद्वयं न मध्ययुगीयभाषामनुसरति। उल्लिखितं शब्दद्वयं हिन्दी-संस्करणसम्पादकेन पूरितं स्यात्। मूलं च न किञ्चन तत्र निर्दिष्टम्।

सती को न मिले धोती कस्विन पहने खासा—इत्यपरः पद्यांशः। सह सन्निवेशादेताभ्यां पद्यांशाभ्यामेकं पद्यं कैश्चिद् विरच्यते। एतस्यापि मूलं नोपलब्धम्।

२८ २० यथा पठितं तत्र च्छन्दसि दोषो न दृश्यते। मूलं नोपलब्धम्।

२९ २१ मूलं नोपलब्धम्। कवीरदासस्येदं पद्यं स्यात्।

३० २१ शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः।
पारदापह्लवाश्चीनाः किराता दरदाः खशाः ॥

(मनसंहिता १०।४३-४४)

क्रमिकसंख्या पृष्ठा

महाभारतेऽप्येतासां जातीनामुल्लेखो दृश्यते।

(आदि १७५।३६-३८)

३१ २२ आक्रान्ते दारदैर्भोट्टैर्म्लेच्छैरशुचिकर्मभिः।
विनष्टधर्मे देशेऽस्मिन् पुण्याचारप्रवर्तनम्॥

(राजतरङ्गिणी १।३१२)

३२ २२ यद्यपि मनुसंहितायां हूना(णा)नां समुल्लेखो न दृश्यते तथापि महाभारते बहुत्र हूनाः कथिताः। तथाहि—

चिबुकांश्च पुलिन्दांश्च चीनान् हूणान् सकेरलान्।
ससर्ज फेनतः सा गौर्म्लेच्छान् बहुविधानपि॥

(आदि१७५।३८)

अत्र गौरित्यनेन नन्दिनीत्युच्यते।

किञ्च— द्वारपालं च तरसा वशे चक्रे महाद्युतिः।
रामठान् हारहूणांश्च प्रतीच्याश्चैव ये नृपाः॥ (सभा ३२।१२)

पुनरपि— वार्ष्णेयान् हारहूणांश्च कृष्णान् हैमवतांस्तथा।
नीपानूपानधिगतान् विविधान् द्वारवारितान्॥ (सभा ५१।२४)

३३ २२ Przhevalsky Nikolay Mikhailovich (Nikolai Mikhailovitch Prjevalsky इत्यपि लिख्यते)—(March 31, 1839—Nov. 1, 1888)। पर्यटकोऽयं बहून् देशान् पर्यभ्रमत्। ते च देशाः—चीन-पूर्वतुरस्क-तिब्वत-मङ्गोलिया-प्रभृतयः। रूशभाषायां बहवो ग्रन्थास्तस्य भ्रमणमधिकृत्य विद्यन्ते, परन्तु ग्रन्थद्वयमाङ्गलभाषायामप्यनूदितं दृश्यते।

३४ २२ Orleans Henri Philippe Maric, Prince d'—(Oct. 15, 1867—Aug. 9, 1901)—फरासीदेशीयः पर्यटकोऽयम् एशियामहादेशस्य मध्यभागं, मादागास्कारदेशम्, इथियोपियादेशादिकं च गतवान्। तेन लिखितं किञ्चन पुस्तकमाङ्गलभाषायां मुद्रितं सत् 'Tonkin and Siam' इत्याख्यां प्राप।

३५ २२ अत्र केचन लेखाः समुद्ध्रियन्ते—(क) ...एवमपि पंचंतेसु यथा चोडा पाडा सतियपुतो केतलपुतो आ तंबपंणी अंतियको योन-राजा ये वा पि तस अंतियकस सामीप राजानो सवंतं

क्रमिकसंख्या पृष्ठा

देवानंपियस पियदसिनो राञ्ञो.....( Second Rock Edict, Girnār Version, Select Inscriptions by D. C. Sirkar, p. 18, C. U. ed.]

(ख) ...धम-वधिय हिद-सुखये च (ध्र)मयुतस योन-कंबोज-गंधरन र(ठि)क-पिति-निकन........(Fifth Rock Edict, Mānsehrā Version, ibid, p. 23)

(ग) ...योन-दूतेन (आ)गतेन महाराजस अंतलिकितस उप(ं)ता सकासं रञ्ञो (Besnagar Garuḍa Pillar Inscription, ibid, p. 90)

३६ २३ ब्राह्मणस्य विवाहवयो यथा मनुसंहितायामुक्तं तेन त्रिंशद् वर्षाणीत्युत्सर्गः, यदि त्वरा स्यात्तर्हि चतुर्विंशतिवर्षोऽपि विवाहं कुर्यात्। त्रिंशद्वर्षस्य विवाहे कन्या स्याद् द्वादश-वार्षिकी, चतुर्विंशतिवर्षस्य त्वष्टवर्षा। तथा च मनूक्तः श्लोकः—

त्रिंशद्वर्षो(द्)वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥
(मनुसंहिता ९।९४)

मेधातिथेर्मते नात्र विवाहवयो विहितः किन्तु वरवध्वोर्वयसि महान् भेदः स्यादित्यत्र तात्पर्यम्। "इयता कालेन यवीयसी कन्या वोढव्या, न पुनरेतावद्वयस एव विवाह इत्युपदेशार्थः। अथापि न यथाश्रुतवर्षसंख्यैव, किं तर्हि बहुना कालेन यवीयसी वोढव्या।" कुल्लूकभट्टोऽपि नात्र वयोनियमं स्वीकरोति—"एतच्च योग्यकालप्रदर्शन-परं न तु नियमार्थम्, प्रायेणैतावता कालेन गृहीतवेदो भवति। त्रिभागवयस्का च कन्या वोढुर्यूनो योग्येति।"

३७ २४ अस्य शब्दस्यार्थः खल्वधस्ताद् मूल एव दर्शितः (०१ पृ०)।

३८ २५ Eugenie Marie de Montijo de Guzman (May 5, 1826—July 11, 1920)—फ्रान्स्-देशस्य सम्राज्ञी, तृतीय-न्यापोलेअँनामकस्य सम्राजः पत्नी।

३९ २९ आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः॥

क्रमिकसंख्या पृष्ठा

आचाराद् विच्युतो विप्रो न वेदफलमश्नुते।
आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत्॥
एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम्।
सर्वस्य तपसो मूलमाचारं जगृहुः परम्॥(मनुसंहिता १।१०८-१०)

४० २९ "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति च्छान्दोग्योपनिषदो (७।२६) मन्त्रोयमाचार्यशङ्करैरेवं व्याख्यातः—"आहारशुद्धौ—आह्रियत इत्याहारः शब्दादिविषयज्ञानं भोक्तुर्भोगायाह्रियते। तस्य विषयोपलब्धिलक्षणस्य विज्ञानस्य शुद्धिराहारशुद्धिः, रागद्वेषमोहदोषैरसंसृष्टं विषयविज्ञानमित्यर्थः। तस्यामाहारशुद्धौ सत्यां तद्वतोऽन्तःकरणस्य सत्त्वस्य शुद्धिर्नैर्मल्यं भवति। सत्त्वशुद्धौ च सत्यां यथावगते भूमात्मनि ध्रुवाऽविच्छिन्ना स्मृतिरविस्मरणं भवति।"

अयमेव मन्त्रांशो रङ्गरामानुजाचार्यैरेवं व्याख्यातः—"आहारशुद्धौ सात्त्विकाहारसेवने सति सत्त्वस्यान्तःकरणस्य शुद्धिर्नैर्मल्यं भवति। तन्नैर्मल्ये सति ध्रुवंस्मृतिरविच्छिन्नस्मृतिसन्तानरूपात्मध्यानं सिध्यति।"

मध्वाचार्येण तु 'आहार'-शब्दस्याहृतिर्ज्ञानाहरणमर्थो गृहीतः। गुरोः सकाशाद् यथायथं ज्ञानाहरणे सति चित्तशुद्धिर्भवति।

४१ ३० कतिषु प्राचीनेषु वङ्गभाषीयसंस्करणेषु 'लड्डुक' इति पाठो दृष्टः, स एव समीचीन इति मन्ये। शताब्दीसंस्करणे तु दृष्टो 'लड्डक' इति पाठो मुद्रणप्रमादः स्यात्।

४२ ३० केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत्॥
(मनुसंहिता ३।१९०)

४३ ३० (क) सीतामादाय बाहुभ्यां मधुमैरेयकं शुचि।
पाययामास काकुत्स्थः शचीमिन्द्रो यथामृतम्॥
मांसानि च सुमृष्टानि विविधानि फलानि च।
रामस्याभ्यवहारार्थं किङ्करास्तूर्णमाहरन्॥
(रामायण, उत्तर ५२।१८-१९)

क्रमिकसंख्या पृष्ठा

(ख) सुराघटसहस्रेण मांसभूतौदनेन च।
यक्ष्ये त्वां प्रीयतां देवी पुरीं पुनरुपागता॥
(रामायण, अयोध्या ५२।८९)

(ग) उभौ मध्वासवक्षीवावुभौ चन्दनरूषितौ।
स्रग्विणौ वरवस्त्रौ तौ दिव्याभरणभूषितौ॥
(महाभारत, उद्योग, ५९।५)

४४ ३० वङ्गप्रदेशे दुर्गापूजामुपलक्ष्य सुमहानुत्सवो भवति। सत्स्वप्यन्यासु पूजासु केवलं पूजेत्युच्यमाने शरत्कालीना दुर्गापूजैव वङ्गीयानां बुद्धिस्था भवति। विद्यायतनेषु वणिक्संस्थासु सर्वकारीयकार्यालयेषु च तदानीं प्रलम्बितोऽवकाशो दृश्यते।

४५ ३५ प्रातःकृत्यानन्तरं शौचार्थं हस्ते मृत्तिका संघृष्यते। मोदकापणभोजनस्य विगर्हणमभिप्रेत्य गोधूमचूर्णम्रक्षणं शौचकार्यमनुकरोतीति परिहासेनोच्यते।

४६ ३५ ढाका-विक्रमपुरादिवास्तव्याः पूर्ववङ्गीयाः सभ्येति शब्दमुच्चारयितुमसमर्थाः 'सइभ्य' इत्युच्चारयन्ति। तेषामुच्चारणमनुसृत्य मूलेऽत्र 'सइभ्य' इति दृश्यते।

४७ ३७ कुर्यात् क्षीरान्तमाहारं दध्यन्तं न कदाचन।
लवणाम्लकटूष्णानि विदाहीनि च यानि तु।
तद्दोषं हर्तुमाहारं मधुरेण समापयेत्॥

४८ ३८ १३६१—वङ्गाब्दीयसंस्करणे 'एक जातेर पाप' इति यद् दृश्यते तदेव समीचीनम्। शताब्दीसंस्करणे 'पक्षे' इति कश्चन नवीनः शब्दोऽन्तर्भावितः। तेन चार्थस्य विपर्यासो भवतीति बुधैरवलोकनीयम्।

४९ ३९ नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।
जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः॥
न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः।
यादृशं भवति प्रेत्य वृथामांसानि खादतः॥
नियुक्तस्तु य न्यायं यो मांसं नात्ति मानवः।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्॥

क्रमिकसंख्या पृष्ठा

असंस्कृतान् पशून् मन्त्रैर्नाद्याद् विप्रः कदाचन।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः॥
कुर्याद् घृतपशुं सङ्गे कुर्यात् पिष्टपशुं तथा।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत् कदाचन॥
यावन्ति पशुरोमाणि तावत्कृत्वो ह मारणम्।
वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि॥
(मनुसंहिता ५।३३-३८)

५० ४० दीनबन्धुमित्ररचितात् 'सधवार एकादशी' (६९ पृ०, साहित्य-परिषत् सं०) ग्रन्थाद् गृहीतोऽयमंशः। तस्येदं तात्पर्यम्—अर्थप्रधानेऽस्मिञ्जगति कस्यचन जनस्य शिष्टत्वमशिष्टत्वं वा तस्य भृतिपरिमाणेन निर्धार्यते। तदर्थवत्त्वमधुना वस्त्रेणानुमीयते। यदि कस्यचन वस्त्रं महामूल्यं सुपरिष्कृतं च भवति तदा तस्य प्रभूतं धनमस्तीत्यनुमाय जनास्तमाद्रियन्त इति स्थितिरियमद्यतनी।

५१ ४१ कश्चन धूर्तोऽतिथिः कस्यचन गृहं गत्वा ब्रवीति—मम सकाशे जम्बीरादिकं कृत्स्नं द्रव्यं विद्यते, केवलं रन्धनसामग्री भवद्भिर्देया। गृहस्वामिना चिन्तितं यदस्य तण्डुलादिकं सर्वमस्ति, उखाकाष्ठादिप्रदानेनैव तस्य भोजनं सम्पत्स्यत इति। वस्तुतस्तु तस्य जम्बीरमात्रमासीत्, यद्यपि तन्न किञ्चिदपि तथापि शब्दचातुर्येण तदेव प्रभूतमिति गृहस्वामिनावगतम्। एवमेव प्रकृत उष्णीषं वेषसज्जार्थं यद्यपि वस्तुतो न किञ्चिदपि तथापि तदेव सर्वमिति प्रतीयमानम्। एतदभिप्रेत्य मूले लेवुटेवु (नेवुटेवु—शब्दादिभूतस्य लकारस्य पश्चिमवङ्गे कुत्रचित् नकारत्वेनोच्चारणं भवति) इत्युक्तम्। लेबु जम्बीरश्च समार्थकौ शब्दौ।

५२ ४५ श्लोकस्य पूर्णं स्वरूपमेवम्—

वामे वामा रमणकुशला दक्षिणे पानपात्रं
मध्ये न्यस्तं मरीचिसहितं शूकरस्यापि मांसम्।
स्कन्धे वीणा ललितसुभगा सद्गुणानां प्रपञ्चः।
कौलो धर्मः परमगहनो योगिनामप्यगम्यः॥

क्रमिकसंख्या पृष्ठा

ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये द्वाविंशोल्लासे श्लोकोऽयं लब्धव्यः। (रसिकमोहन-चट्टोपाध्यायसंगृहीतं कौलावलीतन्त्रम्, ८२ पृ०)

मकारपञ्चकं चेत्थं द्रष्टव्यम्—

मद्यं मांसं च मत्स्यं च मुद्रा मैथुनमेव च।
मकारपञ्चकं चैव महापातकनाशनम् ॥

(तन्त्रसार, ९५० पृ०, पञ्चानन-तर्करत्न सं)

एवं पञ्चमकारोपासनाया लभ्यत्वेऽपि तस्या तात्पर्यं न यथाश्रुतार्थे। सर्वमेतदागमसारे कृष्णानन्दागमवागीशेन प्रदर्शितम्। तत एव समुद्ध्रियते—"अथान्तःपञ्चमकार-यजनप्रकारः। तदुक्तं कुलार्णवे अन्तर्यजने—

सुरा शक्तिः शिवो मांसं तद्भोक्ता भैरवः स्वयम्।
तयोरैक्यसमुत्पन्न आनन्दो मोक्ष उच्यते ॥
आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितम्।
तस्याभिव्यञ्जकं द्रव्यं योगिभिस्तेन पीयते ॥

मद्यपानस्य यथार्थं तात्पर्यं तन्त्रसारे व्याख्यातम्—

"लिङ्गत्रयविशेषज्ञः षट्चक्रपद्मभेदकः।
पीठस्थानानि चागत्य महापद्मवनं व्रजेत् ॥
आमूलाधारमाब्रह्मरन्ध्रं गत्वा पुनःपुनः।
चिच्चन्द्रकुण्डलीशक्तिसामरस्यमहोदयः ॥
व्योमपङ्कजनिष्पन्दधारापानरतो नरः।
मधुपानमिदं देवि चेतरद् मद्यपानकम् ॥" (पूर्ववत्)

तन्त्रसारोक्तदिशा मांसाशनस्य तात्पर्यं प्रदर्श्यते—

"पुण्यापुण्यपशुं हत्वा ज्ञानखड्गेन योगवित्।
परे लयं नयेच्चित्तं पलाशीति निगद्यते ॥
मानसादीन्द्रियगणं संयम्यात्मनि योजयेत्।
मांसाशी स भवेद्देवि इतरे प्राणिघातकाः ॥ (पूर्ववत्)

मैथुनस्य तात्पर्यम्—

परशक्त्यात्ममिथुनसंयोगानन्दनिर्भराः।
मुक्तास्ते मैथुनं तत् स्यादितरे स्त्रीनिषेवकाः ॥ (पूर्ववत)

| क्रमिकसंख्या | पृष्ठा | |
|---|---|---|
| ५३ | ४५ | Field-Marsha |
| ५४ | ४६ | Gauls |
| ५५ | ४६ | Franks |
| ५६ | ४६ | Charlemagne |
| ५७ | ४६ | Barbars |
| ५८ | ४७ | Renaissance |
| ५९ | ४८ | Egalite', Liberte', Fraternite'. |
| ६० | ५० | गीता ३।३३ |
| ६१. | ५१ | boulevard |
| ६२ | ५१ | Champs Elyse'es |
| ६३ | ५१ | Place de la Concorde |
| ६४ | ५१ | Bastille |
| ६५ | ५१ | Lettre de Cachet |
| ६६ | ५२ | विप्लवकारिभिः क्रुद्धैर्जनैः वास्तिलस्य ध्वंसः साधितः (July, 1789)। अत्यन्तमवमानितो नृपतिः (Louis xvi) राष्ट्रप्रधानः सन्नपि नितरां व्यथितः, पलायनपरश्च Varennes इत्याख्ये स्थाने धृतः (June, 1791)। ततः पारिनगरीमानीतो राजा सिंहासनात् प्रच्युतः (Sep., 1792)। अस्ट्रियादेशस्य प्रुशियादेशस्य च सेना यदा फ्रान्सदेशं प्राविशत्तदानीं तस्य नरपतेर्विश्वासघातक इति समाख्यानं जातम्। विचारकगोष्ठ्या च स दोषभागिति निर्णयः कृतस्तेन च तस्य मृत्युदण्डो निर्धारितः। (Jan., 1793)। मृतश्चासौ। अनन्तरं तत्पत्न्या अपि तथैव मृत्युर्जातः (Oct., 1793)। |
| ६७ | ५२ | Republic |
| ६८ | ५२ | La patrie en danger |
| ६९ | ५२ | La Marseillaise<br>Allons, enfants de la patrie,<br>Le jour de gloire est arrive' !<br>Contre nous, de la tyrannie,<br>L'e'tendard sanglant est leve' (bis) |

क्रमिकसंख्या पृष्ठा

Entendez vous, dans les campagnes,
Mugir ces fe'roces soldats ?
Ils viennent, jusque dans nos bras,
E'gorger nos fils, nos compagnes.
Aux armes, citoyens ! Formez vos bataillons !
Marchons (bis) ! Qu'un sang impur
abreuve' nos sillons !

७० ५२ गीता ४।८

७१ ५२ Cocarde— फरासीशब्दोऽयम्। आङ्गलभाषायां cockade इति। काचन स्थूला रेखा कस्यचन गोष्ठीविशेषस्य परिचयसूचिका। फ्रान्सदेशे पूर्वमेकवर्णा रेखा प्रचलिताऽसीत्। अनन्तरमष्टादशशतकस्यान्तिमे भागे वर्णद्वयरञ्जितं रेखाद्वयं प्रवर्तितम्। १७८७ खृष्टाब्दे वर्णत्रयसंवलितं रेखात्रयमङ्गीकृतम्। न्यपोलेअँ-युगादारभ्य प्रायः सर्वेषु देशेषु जातीयवैशिष्ट्यं सूचयितुं वर्णविशेषयुता रेखा स्वीकृता, कुत्रचनैका, कुत्रचिद् द्वे, कुत्र वा तिस्रः।

७२ ५२ Josephine de Beauharnais (nee Marie Josephine Rose Ta'scher' de la Pa'gerie'—1763-1814) —१७९६ खृष्टाब्दे न्यपोलेअँ इत्याख्येन भूपतिना तस्या विवाहः समभूत्। १८०४ खृष्टाब्दे तस्य राज्याभिषेकादियं राजमहिषी सञ्जाता। परं १८०९ खृष्टाब्दे सा सम्राजा विवाहविच्छेदेन परित्यक्ता।

७३ ५२ न्यपोलेअँ जोसेफिन् इत्याख्यां पत्नीं विहाय Maria Louisa इत्यभिधेयामस्ट्रियाराजस्य तनयां राजनीतेर्हेतोरुपयेमे।

७४ ५३ न्यपोलेअँ Leipzig इत्यत्र स्थाने पराजितः (Oct., 1813)। स च Elba इति नामधेयं द्वीपं समानीतः (May, 1814)।

७५ ५३ न्यपोलेअँ Elba-द्वीपात् पलायितः (Feb., 1815), Cannes इत्यत्र च समागतः (March, 1815)। अनन्तरं प्यारिस्-नगरं प्राविशत्।

७६ ५३ Waterloo इति स्थाने समनुष्ठिते युद्धे न्यपोलेअँ पराजितः (June, 1815)। ततश्च प्रतिपक्षिभिः स St. Helena द्वीपं समानीय यावज्जीवं तत्रैव स्थापितः।

| क्रमिकसंख्या | पृष्ठा | |
|---|---|---|
| ७७ | ५३ | प्रथमन्यपोलेअँमहोदयस्य भ्रातुष्पुत्रः खलु तृतीयन्यपोलेअँ इति विदितः। स चायं फ्रान्स्-प्रजातन्त्रस्य प्रधानो निर्वाचितः (Dec., 1848)। सैन्यसञ्चालनेन शक्तिमर्जयित्वा (coup) पश्चाद् वर्षदशकस्य कृते पुनः प्रधानो निर्वाचितः। स च जनानामभिमतं स्वानुकूलं सम्पाद्य सम्राडिति घोषितः (Dec., 1852)। परन्तु दौर्भाग्यात् जार्मानदेशेन सह युद्धे पराजितो धृतश्च (Sep., 1870)। |
| ७८ | ५४ | Science. |
| ७९ | ५४ | Evolutionist. |
| ८० | ५६ | एतदर्थं गीतायाः षोडशोऽध्यायो द्रष्टव्यः। |
| ८१ | ५७ | सभ्यताऽर्जनात् पूर्वमित्यर्थः। |
| ८२ | ५७ | प्रातःस्मरणीयाः कन्याश्चैताः—<br>अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा।<br>पञ्चकं ना स्मरेन्नित्यं महापातकनाशनम्॥<br>श्लोकेऽस्मिन् केचित् 'पञ्चकं ना' इत्यस्य स्थाने 'पञ्च कन्याः' इति पठन्ति। परन्तु विवाहितानां कन्याशब्दवाच्यत्वं न भवेदिति स पाठश्चिन्त्यः। |
| ८३ | ५८ | Romans. |
| ८४ | ५८ | Etruscans |
| ८५ | ५९ | Seljuk Tartars |
| ८६ | ५९ | 'जोर' इति हिन्दीशब्दः पुंलिङ्गे व्यवह्रियते। अतो मूले 'तुरुगण को बढ़ि जोर' इति यद्दृश्यते तन्न समीचीनम्। मूलमेतस्य न ज्ञायते। |
| ८७ | ६० | Manchurian Tartars |
| ८८ | ६० | Grand Lama |
| ८९,९० | ६० | भारतवर्षे नागा इति परिचिताः सन्न्यासिनो विद्यन्ते। ते खलु महान्तं सम्प्रदायविशेषमाश्रित्य निवसन्ति। तेषां सन्न्यासिनां भूयांसो नग्नास्तिष्ठन्ति। एतेषां सदृशा अन्येऽपि ये सन्ति इतालिदेशीयास्तेऽपि ग्रन्थकृता नागा इत्युच्यन्ते। |
| ९१ | ६० | Knights-Templars |
| ९२ | ६० | Spain |

| क्रमिकसंख्या | पृष्ठा | |
|---|---|---|
| ९३ | ६१ | एतदनन्तरमाङ्गलसंस्करणे स्तवकत्रयं दृश्यते (Sixth Impression; April, 1963)। सोऽयं भागो वङ्गीयसंस्करणे परिशिष्टरूपेण विद्यते। तस्मिन् परिशिष्टे स्तवकत्रयादधिकोऽपि कश्चनांशो वर्तते यस्य त्वाङ्गलसंस्करणे न कुत्रापि समुपलम्भः। सर्वोऽयं विपर्यासो मुद्रणप्रमादाद् वाऽन्यस्मादपि कारणाद् वेति न वक्तुं प्रभवामः। भवतु, वङ्गीयसंस्करणस्यैव प्रामाण्यमिति तदनुसृत्यैवानुवादः कृतः। हिन्दीसंस्करणं (षष्ठं) खलु सर्वथा वङ्गीयसंस्करण-मनुकरोति। |
| ९४ | ६३ | स्वामिपादानां तिरोभावादनन्तरं तल्लिखितानां पत्राणां मध्ये ग्रन्थस्यास्य परिशिष्टांशोऽयमुपलब्धः। |
| ९५ | ६३ | Progress of Civilization |
| ९६ | ६३ | अत्र 'स्टान्लि' इत्यनेन Stanley Sir Henry Morton (1841–1904) एव वोधितः स्यात्। |
| ९७ | ६४ | कन्स्टान्टाइन (Flavius Valerius Constantinus—C. 280-337)—खृष्टधर्मावलम्बी प्रथमोऽयं रोमकसम्राट् कस्मिंश्चन दिवसे सायमाकाशे किञ्चनापूर्वं दृश्यं ददर्श, रात्रौ चापूर्वमेकं स्वप्नं दृष्टवान्। ततश्चायं सम्राट् इतालिदेशेन सह प्रवृत्तं युद्धं जितवान्। तस्मादतितरां विश्वास-मापन्नोऽसौ खृष्टधर्मस्यानुकूल्यं चकार।<br>एतेन नृपतिना संवर्धितोऽयं धर्मः सञ्जातप्रभावोऽपि लब्धप्रतिष्ठोऽपि नितरामसहिष्णुत्वमेव प्रकटितवान्। ज्योति-र्विद्यायां, गणिते, प्लेटो-प्रदर्शिते दर्शनशास्त्रेऽसामान्यं प्रावीण्य-मुपगता परमविदुषी हैपेशिया (Hypatia) खृष्टधर्मविरो-धिनीति समुद्घोष्य आलेकजान्द्रियाया धर्मयाजकेन सिरिल (Cyril) इत्यनेन वहुभिश्च तदनुगामिभिस्तस्या निर्घृणा हत्या संसाधिता। तस्या वस्त्राणि बलादाकृष्य गृहीतानि, प्रहारेण पशुवद् व्यापाद्य सर्वाण्यङ्गानि च्छित्त्वाऽग्निदाहेन भस्मसात् कृतानि (A. D. 415)। |
| ९८ | ६४ | New Testament |
| ९९ | ६४ | Gospel |

| क्रमिकसंख्या | पृष्ठा | |
|---|---|---|
| १०० | ६४ | Pasteur |
| १०१ | ६४ | Koch |
| १०२ | ६६ | 'शायेस्ता' इति फारसीशव्दोऽयम्। तस्यार्थः—यथार्थम्, उपयुक्तम्, समीचीनम्; शिष्टः, विनयी इत्येवंरूपः। अत्र च 'शिष्टता' इत्यर्थं द्योतयत्ययं शव्दः। |
| १०३ | ६६ | त्रिवांकुराधिपतिः खलु रविवर्मा इउरोपीयकलाया भारतीयकलायाश्च मेलनेन भारतीयकलाशिल्पे नवजागरणमानिनाय। अलाग्री नायडू कलाशिल्पे तस्य गुरुरासीत्। पाश्चात्त्यपण्डितस्य थियोडोर जेन्सन् इत्यस्य प्रभावोऽप्युल्लेखमर्हति। स्वकृतानां चित्राणां वहुलः प्रचारः स्यादित्यभिप्रेत्य रविवर्मणा मुम्बयीनगर्यां लिथोग्राफ्-मुद्रणालयः प्रारब्धः। वस्तुतस्तु, एतेन चित्रकरेण भारतीयशिल्पस्वरूपं नोद्घाटितमपि तु पाश्चात्त्यप्रभाव एवात्र समधिकं विराजमानः। निवेदितायाः प्रेरणया वङ्गप्रदेशे अवनीन्द्रनाथ-नन्दलाल-प्रमुखैः शिल्पिभिर्भारतीयशिल्पं प्रकाशमगमत्। रविवर्मणः कालः—१८४८-१९०५। |

## शव्दसूची

---

स्वामिविवेकानन्दलिखितं श्रीसीतानाथ-गोस्वामिना वङ्गभाषातः संस्कृतभाषायामनूदितम्

# वर्तमान-भारतम्

# VARTMAṆA-BHARATAM

Sanskrit Translation of Swamiji's original Bengali work "Vartman Bharat"

*TRANSLATED BY*

**Dr SITANATH GOSWAMI,** M. A. (Gold Medallist),
D. Phil., Veda-Vedanta-Vyakaranatirtha,
*Reader, Jadavpur University,*

Author of Vedantadarsane Paramarthatattva etc.
Editor of Isopanisad, Kenopanisad, Tattvasandarbha etc.
Translator of 'Pracya o Pascattya' etc.

**SECOND EDITION**
**August, 1968**

रूप्यकत्रयम्
Rs 3.00

# उत्सर्गपत्रम्

यो निष्णातः प्राच्यप्रतीच्यविद्यासु
यं नाम वृणोति जननी स्वयमेव वाणी
येन खल्वसंख्याताः शिष्याः समध्याप्याचार्यपदं प्रापिताः
यस्मै प्रदत्तो डक्टरोपाधिः स्वयमेव भूषितः
यस्मात् प्राप्नुवन्ति पोषणं छात्रा आत्मीयाश्च
यस्य सविधे नाज्ञानं लभते पदं
यस्मिंश्च निवसति भक्तिर्ज्ञानेन सहैव

तस्मा उत्सृज्यते नूनं सभक्ति बहुमानतः।
वर्तमानभारताख्यो ग्रन्थो भाषान्तरीकृतः।
मुखोपाध्याय आह्वानं पी-एइच्-डीति धारणम्।
सातकड़ि-रभिख्यानं यस्य तस्मै नमो नमः॥
भारतमणिभूतोऽसौ वङ्गानां तिलकश्च सः।
'वीरभूम' जिलादीपो 'दक्षिणग्राम' शोभनः॥
'रातमा'ग्रामवास्तव्योऽधुना 'ढाकुरिया'-जनः।
शिक्षकः पालकश्चासौ तस्मै भूयो नमो नमः॥

# अनुवादकस्य निवेदनम्

सुप्राचीना गौरवमण्डिता च भारतसंस्कृतिरस्मद्देशस्य पारतन्त्र्यवशाद् विश्वस्य कृत्स्नैर्देशैर्यदावमानिता घृणिता मृदिता चासीत्तदानीमेव विश्वसंसदि भारतवर्षस्य भारतीयसंस्कृतेश्च महिमा महता कण्ठेन समुद्घोषितः स्वामिपादैर्विवेकानन्दैः। तद्रचिता ग्रन्था अद्य पर्यन्तं बह्वीषु भाषास्वनूदिताः! दौर्भाग्यमेतद् यद् वर्तमान-भारतस्य मातृस्वरूपायां संस्कृतभाषायां नैतेषामनुवादः केनापि मनीषिणा कृतः। सुरगिरा चेदनूदितो ग्रन्थस्तर्हि स भारतस्य सर्वेषां प्रदेशानां जनानां बोधगोचरो भवेत्। यद्यपि मुसलमानराजत्वे आरबी-पार्शीभाषाभ्यां राजकार्यं प्रचलितं, इंरेज-शासने च आङ्गलभाषया, अद्यापि च कथञ्चन तस्या एवाङ्गलभाषायाः सर्वभारतीय-भाषारूपेणावस्थानं दृश्यते, आगामिनि च वर्षदशके तथैव तिष्ठेत् तथापि वैदेशिक्या भाषाया नात्र कथमपि तादृशो बहुमानः सम्भवी। सहस्रं वर्षाणि वैदेशिकरोषप्रभावाद् बाह्यतः शोषं गतेति प्रतिभातापि संस्कृतभाषायाः फल्गुधारा तूष्णीं प्रवहन्ती, स्वातन्त्र्यार्जनेन पुनर्लब्धपोषा सती भारतविद्याधरित्रीं सस्यश्यामलां करोति करिष्यतीति नात्र संशयः।

अपि च, संस्कृतभाषया लिखितो ग्रन्थः सहस्रादपि वर्षेभ्योऽनन्तरमनायासं भोत्स्यते। सहस्रद्वयवर्षेभ्योऽपि पूर्वं सुरगिरा लिखितो ग्रन्थोऽद्यापि निर्बाधमव-गम्यते किन्तु लक्षणीयमहो यत् प्राकृतभाषया लिखितं पुस्तकं केवलं कतिभ्यः शतकेभ्योऽप्यूर्ध्वं न बोधविषयो भवति! अतः स्वामिपादानां विवेकानन्दानां कृतिर्भारतवर्षे सुचिरमधीता भवत्विति मनस्यभिलाषं सन्धार्य प्रथमप्रयत्नरूपेण 'वर्तमानभारतम्' देवभाषयाऽनूदितम्।

संस्कृतभाषाशिक्षामधिकृत्य स्वामिना विवेकानन्देन यदभिहितं तदत्र सप्रश्रयं निवेदयामि—"प्राकृतजनानां भाषामाश्रित्य भावाः प्रवचनीयाः, सहैव च संस्कृत-शिक्षा नूनं प्रचलेद् यतः संस्कृतशब्दानां ध्वनिरेव जातिं गौरवेण वीर्येण शक्त्या च भूषयति। रामानुज-चैतन्य-कबीराचार्यैरधस्तनीनां श्रेणीनामुन्नयनाय ये प्रयत्ना आस्थितास्तैस्तेषां जीवनकाले सुमहत् फलं लब्धम्। तथापि वैफल्यस्य कारणमपि व्याख्येयम्, अनुसन्धेयं नाम कारणं येन तेषामाचार्याणां तिरो-भावादनन्तरं प्रायः शतादपि वर्षेभ्यः पूर्वमेव तेषां शिक्षायाः प्रभावो लुप्तः। इदं नाम रहस्यम्—···प्राकृतेषु जनेषु संस्कृतशिक्षाप्रसारार्थं न तैः शक्तिर्नियोजिता। भगवतो बुद्धस्याप्ययं भ्रान्तः पदक्षेपो यत्तेन सामान्यजनैः संस्कृतस्य शिक्षाऽवरुद्धा।

...स खलु सामान्यजनानां भाषया प्राह, जनाश्च विज्ञातवन्तः।...किन्तु तेनैव सह संस्कृतभाषापि लब्धप्रसरा स्यात्। ज्ञानमागतम्, किन्तु गतं गौरवं, गता च संस्कृतिः। अभिघातं सहते खलु संस्कृतिरेव, न वैदुष्यराशिः।"[1]

स्वामिपादप्रतिपादितस्य भावगम्भीरस्य प्रबन्धस्यास्य भाषान्तरीकरणं दुःशकमेव तथापि देवीं सरस्वतीमाराध्य तामेव शरणीकृत्य साहसे प्रवृत्तोऽस्मीति क्षम्यतां तत् साहसं विद्वद्भिः।

मच्छात्रेण महाविद्यालयाध्यापकेन श्रीमता हिमांशुनारायण-चक्रवर्तिना मुद्रणभ्रमसंशोधनाय भूयान् श्रमः कृत इति श्रीभगवच्चरणयोस्तस्य सर्वविधं कल्याणं प्रार्थ्यत इति शम्।

नवद्वीपः<br>ज्यैष्ठस्य प्रथमो दिवसः<br>१३७० वङ्गाब्दस्य

श्रीसीतानाथ-गोस्वामिना

1. Complete Works, 8th Edition, Vol. III. Pp 290-91

# द्वितीयसंस्करणेऽनुवादकस्य निवेदनम्

श्रीभगवतः कृपया 'वर्तमान-भारतम्' इत्यनुवादग्रन्थस्य द्वितीयं संस्करणं प्रकाशितम्। संस्कृतभाषा मृतेति ज्वलन्मिथ्या सर्वतः प्रचारितमपि जनानां मनसि भ्रममुत्पादयदपि न तत् कथमपि प्रतिष्ठितं भवितुमर्हेत्। कतिभिर्नाम जनैर्भृशं निषिद्धोऽयं जनः—न हि संस्कृतानुवादः प्रकाशयितव्यः, यदि कथमपि प्रकाश्यस्तर्हि न स्वकीयार्थव्ययेन यतो नैष ग्रन्थः केनापि क्रेष्यते। नितरां भीतभीतेन प्राकाश्यं नीतोऽयं ग्रन्थः परन्तु स्वल्पसंख्यया, यथा पत्रव्ययो ह्रासमुपेयात्। स्वामिनो विवेकानन्दस्य कृतिरिति संस्कृतभाषयाऽनूदितेति विषयमहिम्ना भाषामहिम्ना चातिसत्वरमेव कृत्स्नं ग्रन्थजातं निःशेषितम्। भारतीयसर्वकारैस्तथा पश्चिमबङ्गीय-सर्वकारैरनल्पशः क्रीतेयमनुवादकृतिः। बहुभिर्विद्वद्भिरसकृदनुरुद्धः सन् ग्रन्थस्यास्य द्वितीये संस्करणे मनो निदधामि। मिथ्याप्रचारमोहेन क्षणमाच्छन्नोऽपि वस्तुतत्त्वसाक्षात्कारेणोत्पन्नवीर्यः संख्याधिक्येन प्रकाशनीयोऽयं ग्रन्थ इति निश्चिनोमि। न केवलमेतदेव, विवेकानन्दपादानामपरस्य ग्रन्थस्य 'प्राच्य ओ पाश्चात्य' इति वङ्गभाषीयग्रन्थस्य संस्कृतानुवादोऽपि सम्पादितः, प्रकाश्यते चायमतिशीघ्रम्। भारतसर्वकारेण तदर्थमंशतः साहाय्यं प्रदत्तमिति सुतरामानन्दितोऽस्मि, सप्रश्रयं दार्ढ्येन च निवेदयामि यद् देववाणी न कथमपि मृता, म्रियेत, मरिष्यति वा।

प्रथमसंस्करणाद् मुद्रणव्ययो वर्धितः किन्तु मूल्यवृद्धिर्न करणीयेति चित्रत्रयं नात्र संयोजितम्।

अस्मिन् निवेदने श्रीभगवच्चरणयोः प्रणतिर्निवेद्यते 'नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते'।

नवद्वीपः
फाल्गुनी पूर्णिमा
१३७४ वङ्गाब्दस्य

श्रीसीतानाथ-गोस्वामिना

# भूमिका

स्वामिनो विवेकानन्दस्य सर्वतोमुख्याः प्रतिमायाः प्रसूतं 'वर्तमानभारतम्' वङ्गसाहित्यस्यामूल्यं रत्नम्। तमसाच्छन्ने भारतेतिहासे पूर्वापरसम्बन्धदर्शनं स्वल्पानामेव जनानां भाग्ये घटते। स्थूलदृष्टिः सामान्यः पाठकोऽस्मिन् क्रियतां धर्मवीराणां कर्मवीराणां वा नितरामसम्बद्धं ग्रथितां मूर्ति, स्वल्पं धर्मविप्लवं राज्यविप्लवं च विना न किमप्यवलोकयति। गवेषकाणां यशोलिप्सूनां पाश्चात्य-पण्डितानां सूक्ष्मा दृष्टिरपि प्राच्यजातीनां मनोरचनाचार-व्यवहार-कार्यप्रणाल्यादिभिः प्रतिहता सती बहुशः सरलं मार्गं जहाति, कुज्झटिकावृतां परमाद्भुतां मूर्ति च लक्षयति। विशेषतो या शक्तिः भारतस्यास्थनि मज्जायां च प्रविष्टा, यस्याः प्रभावः खलु वैदिकाधिकाराद् बौद्धाधिकारपर्यन्तं सर्वथा तुङ्गभावसमुदयं समावेश्य भारतं जगतीशिरोभूषणमकरोत्, यस्या हानेः पुनर्मुसलमानादयो विजातीया राजानो भारतं प्रविविशुः सा धर्मशक्तिः पाश्चात्यपण्डितकुलस्य दृष्टौ छायामयेण निःसार-मूर्तिविशेषरूपेण प्रकाशिता। अतः सैव जातीयोन्नतेरवनतेर्वा मूलं भवितुमर्हतीति सर्वथा तेषां बुद्धेरगोचरः। व्यक्तौ स्थिता भावाः समष्टिरूपेण समाजगताः सन्तो जातिविशेषस्य जातीयत्वं सम्पादयन्ति। एष जातीयत्वभावो भिन्नानां जातीनां परस्परं भिन्न इत्येकया जात्यापरजातेर्भावावगमनं दुष्करं भवति। तेनैव च हेतुना भारतेतिहासं सम्बद्धं बोद्धुं पाश्चात्याः पण्डिताः प्रायशो विफलमनोरथा जाताः। वयं मन्यामहे—भारतवर्षे नेतिहासस्याभावः किंतु तस्य संबद्धसंयोजने भारतसंतान एव समर्थः, तस्य च यथार्थः पाठक्रम एकदा तैरेवावश्यमाविष्करिष्यते। प्रभूत-परिभ्रमणाद्, गर्वितराजकुलादारभ्य दरिद्रप्रजापर्यन्तं सर्वैः सह तुल्यं मेलनाद्, भारतस्य तदितरेषां च देशानामाचारव्यवहाराणां जातीयत्व-भावसमूहानां च निरपेक्षदर्शनाद्, अशेषमध्ययनात्, स्वदेशवासिनः प्रत्यपारप्रेम्णः, तेषां दुःखे गभीर-सहानुभूतिवशाच्च स्वामिपादानां मनसि भारतस्य यच्चित्रमङ्कितमासीत्तस्यैव निदर्शनस्वरूपं 'वर्तमानभारतम्'।

भारतेतिहासस्य जटिलानां प्रश्नानां समाधाने तस्य कियद्दूरं कृतकार्यता, न तत्र नो वक्तव्यं किञ्चिदस्ति। यदि पाठकाः समर्थास्तर्हि स्वयमेव विदांकुर्वन्तु। किंतु स्वामिपादानामिवासामान्याज् जीवनात् प्रतिभातश्च समुत्पन्ना मीमांसा चिन्तायोग्या पठनीया चेति कः सन्दिग्धे ?

'वर्तमानभारतम्' आदौ प्रबन्धाकारेण पाक्षिकपत्रे 'उद्बोधने' प्रकाशितमासीत्। बहूनां मुखादेतन्मया श्रुतमासीद् यदेतस्य भाषातिजटिला दुर्बोध्या च। अधुनापि मन्ये केचन तदेव ब्रूयुः किन्तु नाद्य वयं तन्मतमङ्गीकृत्य, भाषादोषं च स्वीकृत्य 'वर्तमानभारतो'-पहारहस्ताः सलज्जं पाठकसमीपं समागताः। भावस्य भाषायाश्चाद्भुतं सामञ्जस्यं वीक्ष्य वयं मुग्धाः स्मः। वङ्गभाषा यदियति स्वल्पायतन एतावन्तं महान्तं भावराशिं प्रकाशयितुं समर्था तन्नास्माभिर्दृष्टपूर्वम्। पदलालित्यमपि बहुत्र विशेषतया विकसितम्। अनावश्यकशब्दनिचयस्यैतावानभावो यद् मन्ये लेखकैः प्रत्येकशब्दस्य भावं परिमाय प्रयोजनानुसारेण शब्दः प्रयुक्तः।

पुनरयं दर्शनग्रन्थोऽपि। भारतसमागतानां यावतीनां जातीनां मानसिकभावराशिभ्यः समुद्भूतं द्वन्द्वं वर्षाणां दश सहस्राणि व्याप्य ताः परिचालिताः, शनैः शनैश्च श्रेणीबद्धाः, उन्नताः, अवनताः, परिवर्तिताश्च कृत्वास्मिन् देशे सुखदुखयोः परिमाणं कथं कदा ह्रासं वृद्धिं वा निनाय, पुनर्विविधजातीनां संमिश्रणे सत्यपि, विभिन्नेष्वाचारेषु व्यवहारेषु कार्यप्रणालीषु च सत्स्वपि, अयमापातासम्बद्धो भारतीयजातिसमूहः केन सूत्रेण बाबद्धः सन्नात्मानं 'हिन्दु'रिति समानं प्रख्यापयति, कस्यां च दिशायामेतस्य भाविनी गतिरित्येवंविधो गुरुतरो दार्शनिकविषयः खलु 'वर्तमानभारत'स्यालोच्यः। ग्रन्थस्यास्य भाषा कथं नाम शृङ्गारकरुणघटितोपन्यासनाटकादीनामिव स्यादिति नास्माभिरवबुध्यते। दौर्भाग्यमेतद् यदेतस्मिन् देशे यथार्थरसज्ञस्यात्यन्तमभावो विद्यते। गभीरचिन्ताप्रसूतस्य विज्ञानेतिहासदर्शनादेरथवा शृङ्गारकरुणेतरवीरसादेर्लेखकाः पाठकाश्च सुतरां विरलाः। आस्तां तावत् प्राकृतजनानां कथा, तेषां रुचिर्मार्जिता विशुद्धा च सती चिन्ताशीलतायाः स्तरमारोहेदिति महद् दूरम्। अतो भाषासम्बन्धिनः प्रतिवादस्योत्तरदानमनावश्यकमिति विचारयामः, पाठकस्य स्वोत्प्रेक्षिता बुद्धिरत्र प्रमाणम्।

उपसंहारतः, ब्राह्मणादीनामुच्चवर्णानामुपरि स्वामिपादानां कश्चन विशेषो रोषकटाक्षो विद्यत इति योऽयं प्रतिवादध्वनिः 'वर्तमानभारत'स्य प्रथमाविर्भावकाले समुत्थितस्तस्मिन्नपि विषये स्वपक्षे विपक्षे वा किञ्चिदप्यनुक्त्वा पाठकानां सत्यानुरागं स्पष्टवादितां चाश्रयामः। प्रतिवादसहस्रे सत्यपि न सत्यस्यापलापो भवति, न वाऽसत्यं प्रतितिष्ठति। 'सत्यं यथार्थे वाङ्मनसे'[1] इति नित्यमस्माभिः स्मर्यते। निन्दायाः कटु-कशाघातादभिजनस्य जनस्य हृदये जायते खल्वात्मानुसन्धानस्य संशोधनस्य च बलवतीच्छा। इतरेषां तु जनानां हृदयं तदाघाताज् जघन्यमसत्यमीर्ष्यां सत्यगोपनमिति बह्वीः कुप्रवृत्तीः समाश्रित्य द्रुतपदसञ्चारेणावनतिपथं धावति।

अत्र वयं भारतस्य महाकवेरुक्तिं स्मरामो यथा—

"अलोकसामान्यमचिन्त्यहेतुकं
निन्दन्ति मन्दाश्चरितं महात्मनाम्।"[2]

ज्यैष्ठस्य प्रथमो दिवसः
१३१२ वङ्गाब्दस्य

अलमिति
सारदानन्देन

---

१ पातञ्जलदर्शनस्य व्यासभाष्यम् २।३०

२ कुमारसम्भवम् ५।७५ ; निन्दन्तीत्यस्य स्थाने द्विषन्तीति बहुलप्रचलितः पाठः।

# वर्तमान-भारतम्

## वैदिकपुरोहितस्य शक्तिः

वैदिकः पुरोहितो मन्त्रबलाद् बलीयान् , देवगणः खलु तन्मन्त्रबलादाहूतः सन् पानभोजनादिकं गृह्णाति, यजमानाय च तस्यामीप्सितफलं प्रददाति। ऐहिक-मङ्गलकामनया प्रजावर्गो राजन्यवर्गश्च तद्द्वारमुपैति। राजा सोमः[3] पुरोधस उपास्यो वरदो मन्त्रपुष्टश्च ; अत एवाहुतिलिप्सुर्देवगणः पुरोधसं प्रति सदयः। दैवबलस्योपरि मानवबलं कथं नाम प्रभवेदिति मानवबलस्य केन्द्रस्वरूपो भूपोऽपि पुरोहितवर्गस्यानुग्रहं प्रार्थयति। तस्य पुरोहितवर्गस्य कृपादृष्टिरेव प्रभूतं साहाय्यं, तस्याशीर्वाद एव सर्वश्रेष्ठः कर इति नृपैरमानि। पुनः कदाचित् तस्यातिभीषण आदेशः, कदाचिद्वा हार्दी मन्त्रणा, कदाचिच्च सकौशलं नीतिजालविस्तार इत्येवंरूपेण बहुशः पुरोहितकुलस्य निर्देशमनुवर्तयति खलु राजशक्तिः। एतत् सर्वमतीत्य विद्यते हि भयम्—पितृपुरुषाणां नामानि तथाऽत्मनो यशः पुरोहितानां लेखनीमपेक्षते। भवतु नाम कश्चन नरपतिर्महातेजस्वी, जीवद्दशायां सातिशयं कीर्तिमान्, प्रजावर्गस्य पितराविव तथापि महासमुद्रे शिशिरबिन्दुपात इव कालसमुद्रे तस्यापि यशःसूर्यश्चिरमस्तमितः ; केवलं महासत्रानुष्ठायिनामश्वमेधयाजिनां वर्षावारिद इव पुरोहितगणस्योपरि सदैवाजस्रधनवर्षिणां महीभृतां नामान्येव पुरोहितप्रसादाद् भृशं प्रज्वलन्ति। सुराणां प्रियः प्रियदर्शी धर्माशोको ब्राह्मण्यजगति नाममात्रशेषः, पारीक्षितस्तु जनमेजय आबालवृद्धवनितानां चिरपरिचितः।

## राज्ञः प्रजायाश्च शक्तिः

राज्यरक्षार्थं स्वस्य विलासव्यसनार्थं स्वजनपोषणाय सर्वोपरि पुरोहितकुलस्य तुष्टये राजरविः प्रजावर्गं शोषयन्नासीत्। वैश्याः खलु राजन्यस्य भक्ष्याः, तस्य सुदुघा गावः।

करग्रहणे राज्यरक्षायां च प्रजावर्गस्य मतममतं वा विशेषतया नापेक्षितम्—नापि हिन्दुराज्ये, न वा तथैव बौद्धशासने। यद्यपि युधिष्ठिरो वारणावते शूद्रस्यापि गृहे पदं न्यस्यति, प्रजाश्च रामचन्द्रस्य यौवराज्येऽभिषेकं प्रार्थयन्ति; सीताया वनवासार्थं रहसि मन्त्रयन्ति तथापि साक्षात् प्रत्यक्षं राज्यस्य समुदाचाररूपेण प्रजानां न कमपि विषयमाश्रित्य वक्तव्यमासीत्। प्रजावर्गः स्वशक्तिं परोक्षरूपेण विच्छिन्न-

तया प्रकाशयति। स्वशक्तेरस्तित्वे प्रजावर्गो नाधुनापि ज्ञानं लेभे। तत्र समवायस्य प्रयत्नो नास्ति, नापीच्छा। सर्वथा तादृशस्य कौशलस्याप्यभावः येनासंख्यानाः स्वल्पाः शक्तय एकीभूताः प्रचण्डं बलं संगृह्णीयुः।

नियमो नास्तीत्यपि न; अस्ति नियमः, अस्ति च प्रणाली, अस्ति च व्यवस्थितो भागः, अस्ति च करादान-सैन्यचालन-विचारसम्पादन दण्ड-पुरस्कारादिषु सर्वेषु विषयेषु सुसूक्ष्मो नियमः किन्तु सर्वत्रैव मूलस्वरूप ऋषेरादेशः, दैवशक्तिरीश्वरावेशश्च। तत्र स्थितिस्थापकत्वं नास्तीत्यपि वक्तुं शक्यम्। अपि च तत्र सर्वसाधारण-प्रजावर्गस्य मङ्गलकर-कार्य-साधनायापेक्षितस्यैकमत्यस्य शिक्षायाः सम्भावनापि नास्ति, नापि च समवेतबुद्ध्या राजगृहीते प्रजाधने सामान्यायाः स्वत्वबुद्धेः शिक्षा सम्भाविता, नापि वा विद्यते काचिदायव्ययनियमनशक्त्यर्जन-शिक्षासम्भावना।

पुनश्च, सर्वोऽयं निर्देशो विराजते पुस्तके। पुस्तकस्थो नियमः क्व, तस्य कार्ये परिणामोऽपि क्व। एको रामचन्द्रोऽग्निवर्णानां[४] शतेभ्योऽनन्तरं जन्म लभते। चण्डाशोकत्वं हि प्रभूतैरेव भूपैराजन्म दर्श्यते, दुर्लभं खलु धर्माशोकत्वम्।[५] आकबरसदृशानां प्रजारक्षकाणां संख्या बत आरङ्गजीवसदृक्षान् प्रजाभक्षकानपेक्ष्य नितरां स्वल्पा।

भवतु नाम युधिष्ठिरो रामचन्द्रो धर्माशोक आकबरो वा, यस्य कस्यचन मुखे सदैवान्यैरन्नमुत्तोल्य दीयते क्रमशस्तस्य स्वकीयमन्नं स्वयमुत्तोल्य भक्षणस्य शक्तिर्लुप्यते। सर्वस्मिन् विषये योऽन्यै रक्ष्यते, तस्यात्मरक्षाशक्तिर्न कदापि स्फुरति। सदैव शिशुवत् प्रतिपालितश्चेत्तदातिबलिष्ठोऽपि युवा भवति दीर्घकायो ननु शिशुः। देवतुल्येन राज्ञा सर्वतः पालिता प्रजापि न कदाचित् स्वायत्तशासनमधिकुरुते; राजमुखमपेक्षमाणा क्रमेण निर्वीर्यतां निःशक्तित्वं च प्रतिपद्यते। तदेव पालितत्वं रक्षितत्वं दीर्घस्थायि सद् भवति सर्वनाशमूलम्।

## स्वायत्तशासनम्

महापुरुषाणामलौकिकप्रातिभज्ञानोत्पन्नं शास्त्रशासितं समाजशासनं राजनि, प्रजासु, धनवति, निर्धनेषु मूर्खेषु विदुषि च सर्वत्राव्याहतं स्यादिति विचारसिद्धं नूनं, किन्तु कियत्पर्यन्तं कार्यान्वितमासीद् वर्तते वा तदधस्तादुक्तमेव। शासने शासितानामनुमोदनमाधुनिकपाश्चात्यजगतो मूलमन्त्रः। तस्यैवान्तिमं वाक्यमामेरिकायाः शासनपद्धतिपत्रे महता रवेण समुद्घोषितम्—'अस्मिन् देशे प्रजानां शासनं प्रजाकर्तृकं प्रजाहिताय च स्याद्' इति। एतत् खलु भारतवर्षे सर्वथाऽभूतपूर्वमित्यपि न। यवनपरिव्राजका बहून् क्षुद्रान् स्वाधीनतन्त्रानस्मिन् देशे

ददृशुः, बौद्धग्रन्थेष्वपि कियत्सु स्थलेषु निदर्शनमेतस्य लभ्यते। प्रजानुमोदितायाः शासनपद्धतेर्बीजं यद् ग्राम्यपञ्चके नूनं विद्यमानमासीदधुनापि चेतस्ततो दृश्यमानं तत्र नास्ति सन्देहावसरः। परन्तु बीजमेतदुप्तमपि नैवाङ्कुरितम्। नायं भावो ग्राम्यपञ्चकातिरिक्ते समाजे कुत्रापि लब्धप्रसरः।

धर्मसमाजे त्यागिनां मध्ये बौद्धयतीनां च विहारे सैषा स्वायत्तशासनप्रणाली विशेषतया परिवर्धितेति बहुत्र निदर्शनमुपलभ्यते, अद्यापि च नागासन्न्यासिनां मध्ये 'पञ्च'-स्य शक्तिः सम्मानं च, एकैकस्य नागाजनस्य स्वसम्प्रदाये विद्यमानोऽधिकारः, तस्मिंश्च सम्प्रदाये समवायशक्तेः कार्यं चालोक्यमानं चमत्कारमावहति।

## बौद्धविप्लवस्तत्फलं च

बौद्धोपप्लावनेन सहैव पुरोहितस्य शक्तेः क्षयो राजन्यवर्गस्यः च शक्तेर्विकासः समभवत्।

बौद्धयुगे पुरोहितः सर्वत्यागी मठाश्रय, उदासीनश्च। शापेन चापेन वा राजकुलं पदानतं कर्तुं न तेषामुत्साहोऽस्ति नेवेच्छा विद्यते; विद्योतापि हुतभोजिनो देवकुलस्यावनतिमनुसृत्य तेषां प्रतिष्ठापि गच्छत्यधः। शतानि ब्रह्मेन्द्रादीनां बुद्धत्वं गतस्य नरदेवस्य चरणयोः प्रणतानि, यस्मिंश्च बुद्धत्वे मानवसामान्यस्यैवाधिकारः।

अतो राजशक्तिरूपो महाबलो यज्ञाश्वो नाधुना पुरोहितहस्तधृतो दृढसंयतः प्रग्रहः, सोऽयमिदानीं स्वबलेन स्वच्छन्दं विचरति। नात्र युगे शक्तिकेन्द्रं सामगायिनि यजुर्याजिनि वा पुरोहिते, न च राजशक्तिर्भारतस्य त्रिकोणेषु क्षत्रियवंशसम्भूतेषु क्षुद्रेषु मण्डलीपतिषु समाहिता; दिगन्तमपि व्याप्य ये नामाप्रतिघातेन शासति तादृशा आसमुद्रक्षितीशा हि युगेऽस्मिन् मानवशक्तेः केन्द्रस्वरूपाः। नास्य युगस्य नेता खलु विश्वामित्रो वसिष्ठो वा किन्तु सम्राजश्चन्द्रगुप्तधर्माशोकादयः। बौद्धयुगीया एकातपत्राः पृथिवीपतयः सम्राज इव भारतगौरवं वर्धयन्तो राजानो न जातु पुनर्भारतसिंहासनमारूढाः। एतस्य युगस्यान्त आधुनिको हिन्दुधर्मो राजपुतादिजातयश्चाभ्युत्थिताः। तदीये काले भारतस्य राजदण्डः पुनरखण्डप्रतापाद् विच्युतः सन् शतधा विदीर्णो जातः। समयेऽस्मिन् ब्राह्मण्यशक्तेः पुनरभ्युत्थानं राजशक्त्या सहकारितया प्रावर्तत।

वैदिककालात् प्रारब्धस्तथा जैनबौद्धविप्लववशाद् महताकारेण स्फुटीकृतो योऽयं पुरोहितशक्ते राजशक्तेश्च चिरन्तनो विवादः सोऽस्मिन् विप्लवे समाहितोऽभूत्। भवेन्नामाधुना द्वयोरेतयोर्महाबलयोः परस्परसहायकत्वं किन्तु गतं तादृशं क्षात्रवीर्यं, ब्रह्मवीर्यमपि लुप्तम्। उभयस्वार्थसहायकं विरुद्धपक्षस्य निर्मूलकाषं कषणं, बौद्ध-

वंशस्य समूलमुत्पादनमित्येवंविधेषु कार्येषु क्षीणवीर्योऽयं नूतनः शक्तिसङ्गमो बहुधा विभक्तः सन् गतप्राण इव जातः ; शोणितशोषण-वैरनिर्यातन-धनहरणादिषु कर्मसु नियतं व्यापृतः सन्, पूर्वस्य राजन्यवर्गस्य राजसूयादियज्ञानुष्ठानस्य हास्योद्दीपकमभिनयाङ्कं सूचयन्, भाटचारणादिस्तुतिगायकैः श्रृङ्खलितचरणः सन्, मन्त्रतन्त्राणां सुमहता वाग्जालेन जडितः सन् पश्चिमागतमुसलमानव्याधनिचयस्य सुलभो वध्यो बभूव।

पुरोहितशक्ते राजशक्तेश्च मिथः संग्रामो वैदिककालादारभ्य प्रचलितः, भगवतः श्रीकृष्णस्यामानुषी प्रतिभा तस्य जीवद्दशायामुभयोः प्रतिवादित्वं प्रायः समाप्तिं नेतुमशक्नोत्। ब्राह्मण्यशक्तिर्हि जैनबौद्धोपप्लावनकाले भारतस्य कर्मक्षेत्राद-पसृतप्राया सञ्जाता, अथवा प्रबलप्रतिद्वन्द्विनो धर्मस्याज्ञामनुवर्तयन्ती कथञ्चन जीवनं धृतवती। एषा शक्तिर्मिहिरकुला[६] देर्भारताधिकारादारभ्य कियत्कालं प्राणात्ययेनापि पूर्वप्राधान्यस्थापनार्थं चेष्टितवती, तस्य च प्राधान्यस्थापनस्य कृते मध्य-एशिया-नामकाद् भूखण्डात् समागतस्य क्रूरकर्मणो बर्बरबलस्य पदयोरानता सती, तस्य बीभत्सा रीतीर्नीतीश्च स्वदेशे संस्थाप्य, विद्याविहीनबर्बर-वञ्चनोपयोगिनं सरलं मार्गं मन्त्रतन्त्रमात्रमाश्रित्य, तदर्थञ्च स्वयं सर्वतोभावेन विद्याविरहिता, हतवीर्या तथाचारवर्जिता सती, आर्यावर्तमेकं सुमहान्तं वामबीभत्स-बर्बराचारावर्तं विदधौ। यैषा पुरोहितशक्तिर्ब्राह्मण्यशक्तिर्वा कुसंस्कारस्यानाचारस्य चावश्यम्भाविफलस्वरूपेण सारहीना परमदुर्बला च परिणता सैषा पश्चिमसमुत्थितस्य मुसलमानाक्रमणरूपस्य प्रभञ्जनस्य स्पर्शमात्रेण शतधा विदीर्णा भूमिसादभवत्। पुनः कदापि समुत्थास्यति न वेति को जानीयात्?

## मुसलमानाधिकारः

इतश्च मुसलमानराजत्वे पौरोहित्यशक्तेः प्रादुर्भावोऽसम्भवी। हजरतमहम्मद आसीत् सर्वथा तच्छक्तेर्विरोधी यथासम्भवं च तादृश्याः शक्तेरेकान्ततो विनाशार्थं नियमादिकं व्यरचयत्। मुसलमानराजत्वे च राजा स्वयमेव प्रधानः पुरोधाः ; स एव धर्मगुरुः, जातश्चेदसौ सम्राट् तर्हि जगतो नेता भविष्यतीति पोषयत्याशाम्। याहुदी उत ईशाही नात्यर्थं घृण्यो मुसलमानस्य, यतस्तौ केवलमल्पविश्वासिनौ किन्तु काफेरः ( अविश्वासी ) मूर्तिपूजको हिन्दुरस्मिन् जन्मनि वध्यस्तथान्ते भवत्यनन्त-नरकभाक्। तस्य काफेरस्य धर्मगुरुगणं पुरोहितवर्गं प्रति कृपया कथञ्चन जीवनधारणार्थमाज्ञामात्रं दातुमर्हति मुसलमानो नृपतिः, तदपि च कदाचित् ; अन्यथा राज्ञो धर्मानुरागो लेशतश्चेद् वृद्धिं गतस्तदानीं काफेरहत्यारूपस्य महायज्ञस्यायोजनम्!

एकतो राजशक्तिर्भिन्नधर्मिणि भिन्नाचारे प्रबले राजगणे सञ्चारिता, अपरतश्च

पौरोहित्यशक्तिः समाजशासनाधिकारात् सर्वथा विच्युता। मन्वादिधर्मशास्त्रस्य स्थानमधिकरोति कोरानोक्ता दण्डनीतिः, संस्कृतभाषायाश्च स्थाने विराजते पारसी उत आरबी। विजित-घृणितहिन्दूनां सविधे संस्कृतभाषा धर्ममात्रप्रयोजना समभूत्, अतश्च सा पुरोहितानां समीपे यथा कथञ्चित् प्राणान् धारितवती। इतश्च ब्राह्मण्यशक्तिः केवलं विवाहादिगतरीतिनीतिपरिचालने स्वस्य दुराकाङ्क्षां चरितार्थां कुर्वती रराज, एतदपि च तावदेव यावद् मुसलमानराजस्य दयास्ति।

वैदिके तत्सन्निहिते वोत्तरकाले पौरोहित्यशक्तेः पेषणाद् राजशक्तिर्न स्फुरिता। बौद्धविप्लवादनन्तरं ब्राह्मण्यशक्तेर्विनाशेन सहैव भारतस्य राजशक्तिः कार्त्स्न्येन विकासमैदिति दृष्टमस्माभिः। बौद्धसाम्राज्यविनाशो मुसलमानराज्यस्थापनमित्यनयोः कालयोर्मध्ये राजपुतजात्या राजशक्तेः पुनरुद्भावनप्रयासो विफलतां गत इत्यस्यापि कारणं पौरोहित्यशक्तेर्नवजीवनार्थं प्रयत्नः।

मुसलमाननृपतिना पद्भ्यां क्षुण्णा खलु पौरोहित्यशक्तिः। स च बाहुल्येन मौर्यगुप्तान्ध्रक्षात्रपादिसम्राजां गौरवश्रियं पुनरुद्भासयितुं समर्थोऽभूत्।

इत्थञ्च या भारतस्य पौरोहित्यशक्तिः कुमारिलादारभ्य श्रीशङ्कर-श्रीरामानुजादिभिः परिचालिता, यस्या बाहुस्वरूपा राजपुतादयः, यस्याः कलेवरं जैनबौद्धरुधिराक्तं, या च पुनरभ्युत्थानमाचकाङ्क्ष सा मुसलमानाधिकारकाले चिरं प्रसुप्ता बभूव। युद्धादिकं प्रतिद्वन्द्वित्वं चात्र युगे केवलं नृपस्य नृपान्तरेण। एतस्य युगस्यान्ते यदा हिन्दुशक्तिर्महाराष्ट्राणां शिखानां वा वीर्यमाश्रित्य हिन्दुधर्मं कथञ्चित् पुनः संस्थापयितुं प्राभवत्तदापि तत्र पौरोहित्यशक्तेः करणीयं विशेषतया किञ्चिन्नासीत्; किमन्यत्, शिखाः प्रकाश्यतया ब्राह्मणचिह्नादि हापयित्वा स्वधर्मलिङ्गैर्भूषयित्वा च ब्राह्मणसन्तानं स्वसम्प्रदाये परिजगृहुः।

## इंग्लण्डकर्तृको भारताधिकारः

एवं बहुभ्यो घातप्रतिघातेभ्योऽनन्तरं राजशक्तेरन्तिमो जयो भिन्नधर्मावलम्बिनो राजन्यवर्गस्य व्याजेन कियन्ति शतकानि व्याप्य भारतगगने प्रतिध्वनितः। परन्तु युगस्यास्य चरमे भागे काचनाभिनवा शक्तिस्तूष्णीं भारतसंसारे स्वप्रभावं ततान।

एषा शक्तिरेवं नवीना, एतस्या जन्म स्थितिश्च भारतवासिभिरेतादृशमचिन्तनीयम्, अस्याः प्रभाव इयान् दुर्धर्षो यदधुनाप्येतस्या अप्रतिहतदण्डधारित्वेऽपि मुष्टिमेया एव भारतीया विजानन्ति कीदृश्येषा शक्तिरिति। अत्र खलूच्यते इंग्लण्डकर्तृको भारताधिकारः।

सुप्राचीनादेव कालाद् धनधान्यपूर्णस्य भारतस्य विशालं क्षेत्रं प्रबलस्य वैदेशिकस्याधिकारस्पृहामुद्दीपयदासीत्। मुहुरेव भारतवासी विजातीयैर्मर्दितोऽभूत्।

कथं तर्हि इंलण्डकर्तृको भारताधिकार-रूपोऽयं विजयवृत्तान्तः खल्वभिनव इत्युच्येत ?

अध्यात्मबलेन मन्त्रबलेन शास्त्रबलेन च बलीयसः, शापास्त्रसमन्वितस्य, संसारस्पृहाशून्यस्य तपस्विनो भ्रूकुटिमालोक्य दुर्धर्षं राजबलं कम्पान्वितं भवतीति भारतवासिना चिरं दरीदृश्यते। भारतवासिनावलोकितमेनदपि यत् सैन्यसहायानां महावीराणां शस्त्रबलानां राज्ञामप्रतिहतवीर्यस्य तथैकाधिपत्यस्य च पुरतः प्रजाकुलं, सिंहस्य पुरतोऽजायूथ इव, निःशब्दमाज्ञां पालयतीति परन्तु यद्वैश्यकुलं, राज्ञां पुरस्तत्तु का कथा, राजपुरुषाणामेकस्यापि पुरः स्वयं महाधनमपि सदैव बद्धहस्तं भयत्रस्तं च दृष्टं तदेव मुष्टिमेयं वैश्यकुलमेकत्रितं सद् वाणिज्यानुरोधात् सरितं समुद्रं चोल्लङ्घ्य केवलं बुद्धिबलेनार्थबलाच्च शनैः शनैश्चिरप्रतिष्ठितं हिन्दुमुसलमानराजगणमात्मनः क्रीडनकरूपेण परिणामयिष्यतीति भारतीयेन न कदापि दृष्टम्! न केवलमेतदेव, स्वदेशीयान् नृपान् धनबलेन स्वस्य भृत्यत्वमङ्गीकार्य तेषां शौर्यं वीर्यं विद्याबलं च स्वस्य धनागमस्य प्रबलयन्त्रत्वेन पर्यवसाययिष्यतीति भारतवासिना नावलोकितपूर्वम्! यद्देशस्य महाकर्वरलौकिकतुलिकायामुन्मेषिनः कश्चन गर्वितो लर्डमहोदयः कश्चन प्राकृतं पुरुषं प्राह—'पामर, राजसामन्तस्य पवित्रं देहं स्प्रष्टुमुत्सहसे' इति तस्यैव देशस्य प्रबलसामन्तवर्गस्योत्तराधिकारिण एवाचिरेण कालेन इस्ट-इण्डिया-कोम्पानि-नामकस्य वणिक्सम्प्रदायस्याज्ञावहा भृत्याः सन्तो भारतवर्षे प्रेर्यमाणा जीवनस्योच्चाकाङ्क्षायाः 'परा काष्ठेति चिन्तयिष्यन्तीति न दृष्टमितः पूर्वं कदापि भारतवासिना !!

## वैश्यशक्तेरभ्युदयः

सत्त्वादिगुणत्रयस्य संक्षोभात् प्रसूता ब्राह्मणादयश्चत्वारो वर्णाः सुप्राचीनकालात् सर्वस्मिन् सभ्ये समाजे विराजन्ते। कालप्रभावाद् देशभेदेन च तस्य वर्णचतुष्टयस्य कस्यचनैकस्य संख्याधिक्यं प्रतापाधिक्यं वा घटते किन्तु पृथिव्या इतिहासश्चेदालोच्येत तर्हि मतिरेवं जायते यत् प्राकृतिकनियमवशाद् ब्राह्मणादिवर्णचतुष्टयं यथाक्रमं वसुन्धरां भोक्ष्यत इति।

चीन-सुमेर[८]- बाबिल[९] - मिसरि-खल्दे[१०]-आर्य-इरानि[११]-याहुदी-आराबादिषु सर्वासु जातिषु समाजनेतृत्वं प्रथमतया ब्राह्मणस्य पुरोहितस्य वा। द्वितीये युगे क्षत्रियकुलस्योत राजसमाजस्यैतैकाधिकारिणो नृपतेरभ्युदयः।

वैश्यकुलस्य, वाणिज्येन वा धनमर्जयतः सम्प्रदायस्य, समाजनेतृत्वं केवलम् इंलण्डप्रमुखेष्वाधुनिकपाश्चात्यजातिषु प्राथम्येन संघटितम्।

यद्यपि प्राचीनकाले वाणिज्यप्राणानि टायर-कार्थेजादीनि, आपेक्षिकतयार्वाचीने

काले मेनिसादीनि क्षुद्राणि राज्यानि प्रबलप्रतापान्वितानि जातानि, किन्तु तथापि तत्र यथार्थवैश्याभ्युदयो न समजायत।

प्राचीनराजन्यवर्गस्य वंश्या एव प्राकृतजनैः स्वदासवर्गैश्च तद्वाणिज्यं कारितवन्त उद्वृत्तं च बुभुजिरे। देशशासनादिषु कर्मसु तानेव कति पुरुषान् व्यतीत्य कस्यापि वाङ्निष्पत्तेरधिकारो नासीत्। मिसरादिषु प्राचीनेषु देशेषु ब्राह्मण्यशक्तिः स्वल्पं कालं प्राधान्यमुपभुज्य राजन्यशक्त्यधीना तत्सहायकरूपेण चोषितवती। चीनदेशे कंफुत्सस्य[१२] प्रतिभाया हेतोः केन्द्रीभूता राजशक्तिः सार्धसहस्रद्वयादप्यधिकान् वत्सरान् पौरोहित्यशक्तिं स्वेच्छया पालयति, विगतं शतकद्वयं च सर्वग्रासिनस्तिब्बतीया लामा राजगुरवोऽपि सर्वथा सम्राजो वशं गताः कालं यापयन्ति।

भारतवर्षे राजशक्तेर्जयो विकासस्थान्याः प्राचीनसभ्यजातीरपेक्ष्य सुमहतः कालादनन्तरमजायत, तेनैव हेतुना चीन-मिसर-बाबिलादिजातीनां साम्राज्याभ्युत्थानात् सुदीर्घकालव्यवधानेन भारते तदभवत्। केवलं याहुदीजातौ राजशक्तिर्बहुप्रयत्नेनापि पौरोहित्यशक्तेरुपरि स्वाधिपत्यविस्तारे सम्पूर्णतयाऽक्षमाभूत्। वैश्यवर्गोऽपि न तद्देशे कदापि शक्तिं प्राप। प्रजासामान्यं पौरोहित्यबन्धनमोक्षाय चेष्टितं सदभ्यन्तरत ईशाहीप्रभृतिधर्मसम्प्रदायसंघर्षेण, बहिश्च महाबलरोमकसाम्राज्यपेषणेनोत्सादितम्।

यथा प्राचीनयुगे राजशक्तेः पराक्रमवशाद् ब्राह्मण्यशक्तिर्भूयः प्रयतितापि पराजिता जाता तथैवास्मिन् युगे नवोदितवैश्यशक्तेः प्रबलाघातेन कति नाम राजमुकुटानि धूल्यवलुण्ठितानि, कति च राजदण्डाश्चिराय भग्नाः। यानि च कानिचन सिंहासनानि सुसभ्ये देशे कथञ्चित् प्रतिष्ठितानि व्यराजन्त तान्यपि तैललवण-शर्करा-सुरा-व्यवसायिनां पण्यलब्धधनप्राचुर्यप्रभावात्, धनवतां सज्जासम्पादकत्वेन गौरवविस्तारासादत्वेन च।

यस्या नवीनाया महाशक्तेः प्रभावेण क्षणकालेनैव तडित्प्रवाह एकस्मान्मेरुप्रान्तात् प्रान्तान्तरं वार्तां वहति, महाचलसदृशत्तुङ्गतरङ्गमयी महोदधिर्यस्या राजपथः, यस्या निर्देशेनैकदेशस्य पण्यचयो लीलया देशान्तरं समानीयते, यस्याश्चादेशेन सम्राट्कुलमपि कम्पमानं, संसारसमुद्रस्य सर्वजयिन्यास्तस्या वैश्यशक्तेरभ्युत्थानरूपस्य महातरङ्गस्य शीर्षशुभ्रफेनराशौ प्रतिष्ठितम् इंलण्डसिंहासनम्।

अतश्च इंलण्डकर्तृको भारताधिकारो न बाल्ये श्रुतो बाइबेलग्रन्थभूत ईशामसिना भारतजयः, नापि चासौ पाठानमोगलादिसम्राट्कर्तृकेन भारतविजयेन तुल्यः। किन्तु ईशामसेः, बाईबेलस्य, राजप्रासादस्य, चतुरङ्गबलस्य भूकम्पकारिणः पदक्षेपस्य, तूरीभेरीनिनादस्य, राजसिंहासनस्य बह्वाडम्बरस्य च पृष्ठत एव वास्तव इंलण्डो विद्यमानः। तादृशस्य (वास्तवस्य) इंलण्डस्य ध्वजः—यन्त्रस्य धूमनाली,

वाहिनी—पण्यपोतः, युद्धक्षेत्रम्—जगतः पण्यवीथिका, सम्राज्ञी—स्वयं सुवर्णाङ्गी श्रीः।

अतएव पूर्वमुक्तं यदभिनवोऽयं वृत्तान्त इंलण्डकर्तृको भारतविजय इति। अनया नवीनया महाशक्त्या सह संघर्षे भारतस्य कीदृशो नूतनो विप्लवः समुपस्थास्यति, तस्य च परिणामरूपेण भारतस्य कीदृशं वा परिवर्तनं भविष्यतीति भारतेतिहासस्य विगतकालान्नानुमेयम्।

## पुरोहितशक्तिः

उक्तपूर्वमेतद् यद् ब्राह्मणक्षत्रवैश्यशूद्राश्चत्वारो वर्णाः पर्यायेण पृथिवीं भुञ्जते। प्रत्येकस्य वर्णस्यैव राजत्वकाले कानिचन लोकहितकराणि कार्याणि, कानि चापराण्यहितानि कर्माण्यनुष्ठीयन्ते।

पौरोहित्यशक्तेः स्तम्भोऽस्ति बुद्धिबले, न खलु बाहुबले। अतश्च पुरोहितप्राधान्येन साकमाविर्भवति विद्याचर्चा! अतीन्द्रियाध्यात्मिकजगतो वार्तां लब्धुं तदानुकूल्यलाभाय च सर्वमानवप्राणाः सततं व्याकुलाः। प्राकृतानां तत्र प्रवेशोऽसम्भवी। जडव्यूहं विभिद्य संयतेन्द्रिया अतीन्द्रियदर्शिनः सत्त्वप्रधानाश्च पुरुषास्तत्र गन्तुमलं, ततः सन्देशमानयन्ति, अन्यांश्च पथो निर्दिशन्ति। एत एव पुरोहिताः, मानवसमाजस्यादिगुरवो नेतारः परिचालकाश्च।

देवविदः पुरोहिता देववत् पूजिताः। मस्तकस्वेदेन पादान् संक्लेद्य न तैरन्नं समुपार्ज्यते। सर्वभोगस्याग्रं खलु देवभोग्यम्, देवानां च मुखस्वरूपं पुरोहितकुलम्। समाजो हि ज्ञानादज्ञानाद् वा तं सावसरं करोतीति ऋत्विग् भवति चिन्ताशीलः, ततश्च पुरोहितप्राधान्याद् विद्यायाः प्रथम उन्मेषः। दुर्धर्षं क्षत्रियसिंहं, भयकम्पितं च प्रजारूपमजायूथमन्तरा दण्डायमानः पुरोहितः। सिंहस्यैतस्य सर्वनाशेच्छा पुरोहितहस्तधृतया अध्यात्म-कशायास्ताडनेन नियमिता। धनजनमदोन्मत्तस्य भूपालवृन्दस्य यथेच्छाचाररूपाग्निशिखा सर्वानेव भस्मसात् कर्तुं पारयति, केवलं धनजनहीनस्य दरिद्रस्य तपोबलसहायस्य पुरोहितस्य वाणीरूपे जले सोऽग्निनिर्वापितः। पुरोहितप्राधान्येन सभ्यतायाः प्रथमाविर्भावः, पशुत्वस्योपरि देवत्वस्याद्यो विजयः, जडस्योपरि चेतनस्यादिभूतोऽधिकारविस्तारः, प्रकृतेः क्रीतदासस्य जडपिण्डसदृशस्य मनुष्यदेहस्याभ्यन्तरेऽस्फुटतया यदधीश्वरत्वं निहितं तस्य च प्राथमिको विकासः। पुरोहितः खलु जडचैतन्ययोरादिमो विभाजकः, इहपरलोकयोः संयोगस्य सहायः, देवमनुष्ययोर्वार्तावहः, नृपतिप्रकृत्योर्मध्यवर्ती सेतुः। बहूनां कल्याणानां प्रथमाङ्कुरस्तस्यैव तपोबलेन, तस्यैव विद्यानिष्ठया, तस्यैव त्यागमन्त्रेण, तस्यैव प्राणसेकेन समुद्भूतः, अतः सर्वेषु देशेषु प्रथमा पूजा तेनैव लब्धा, अतएव च तेषां पुरोहितानां स्मृतिरप्यस्मत्समीपे पवित्रा।

दोषोऽप्यस्ति ; प्राणस्फूर्त्या सहैव मृत्युबीजमप्युप्तम्। तमो ह्यालोकमनुवर्तयति। अस्ति च प्रबलो दोषो यो यथाकालमसंयतश्चेत् समाजं नाशयेत्। स्थूलमाश्रित्य शक्तेर्विकासः सर्वजनीनः प्रत्यक्षः ; अस्त्रशस्त्रयोश्छेदनं भेदनं च, अग्न्यादेर्दाहिकां शक्तिं, स्थूलप्रकृतेः प्रबलं संघर्षं—सर्वोऽपि पश्यति विजानाति च। अत्र न कस्यापि सन्देहः पदं लभते, मनसि द्विधा च नावतिष्ठते। किन्तु यत्र शक्तेराधारो विकासकेन्द्रं च केवलं मानसिकं, यत्र बलं च केवलं शब्दविशेषे, उच्चारणविशेषे, जपविशेषे, अपरे च मानसिके प्रयोगविशेषे तत्र ह्यालोके तमः संस्पृष्टम् ; तत्र विश्वासे व्यसनोदयौ स्वाभाविकौ. प्रत्यक्षेऽपि तत्र कदाचित् सन्देहः समुपैति। यत्र रोग-शोक-भय-तापेर्ष्या-वैरनिर्यातनानि सर्वाणि समुपलब्धबाहुबलमतीत्य, स्थूलोपायमतिक्रम्य. स्वेष्टसिद्ध्यर्थं केवलं स्तम्भनोच्चाटन-वशीकरणमारणादीन्याश्रयन्ति तत्र स्थूलसूक्ष्मान्तराले कुज्झटिकावृते प्रहेलिकामये जगति नियतं वसतः पुरुषांस्तादृशो धूम्रमयभावः स्वतः प्रविशति। तन्मनसः पुरतः सरला रेखा प्रायो न प्रतिपद्यते, पद्येतापि मनस्तां वक्रीकृत्य गृह्णाति। एतस्य परिणामो वक्रता - हृदयस्यातिसङ्कीर्णो नितरामनुदारश्च भावः। सर्वस्मादपि भीषणा खलु निदारुणेर्ष्याप्रसूनाऽसहिष्णुता। स ब्रूते--देवो मम वशं गतः, रोगादिष्वाधिपत्यमस्ति भूतप्रेतादीन् वशीकरोमि ; यस्यैतस्य प्रभावान्ममैतत् पार्थिवं सुखं स्वाच्छन्द्यमैश्वर्यं च तत् कथमन्येभ्यो दास्यामि ? तच्च कृत्स्नं केवलं मानसिकमिति तस्य गोपनमपि सुशकम्। एतस्मिन् घटना-चक्रे मानवप्रकृतेर्यद् भावि तद् भवति—अनिशमात्मगोपनस्याभ्यासेनायाति स्वार्थपरता, कपटता, ततश्च विषमयं फलम्। गोपायितुमियमिच्छा कालेनात्मन्यपि प्रतिकरोति। अभ्यासं विना वितरणं च विहाय प्रायः सर्वासां विद्यानां विनाशो भवति। शिष्यते यत्तदलौकिकेन दैवेनोपायेन प्राप्तमिति तस्य मार्जनपि ( दूरमास्तां नवीनविद्यार्जनम् ) वृथेति प्रतिभाति। ततश्च विद्याहीनं पुरुषकाररहितं पूर्वपुरुषाणां नाम एव धारयत् पुरोहितकुलं हि पैतृकाणां सम्मानाधिकाराधिपत्यानामक्षुण्णस्थापनाय येन केन प्रकारेण प्रयतते। अत एवान्यैर्वर्णैः सह जायते तुमुलः संघर्षः।

प्राकृतिकनियमेन जराजीर्णस्य स्थाने नवप्राणोन्मेषस्य पुनःसंस्थापनार्थं प्रवर्तितेन स्वाभाविकप्रयत्नेन समुपस्थितमेतत्। एतत्संघर्षे जयलाभस्य फलमफलं च पूर्वमेवोक्तम्।

अभ्युदयकाले पुरोहितस्य यत् तपो यः संयमो यस्त्यागः सत्यानुसन्धानाथ सम्यक् प्रयुक्तं तदेव पतनात् प्राक् केवलं भोग्यसंग्रहार्थमाधिपत्यविस्तारार्थं च कार्त्स्न्येन व्ययितम्। यस्याः शक्तेराधार इति तस्य बहुमानं पूजा चासीत् सैव शक्तिरधुना स्वर्गधाम्नो नरकं समानीता। उद्देश्यविहीना सूत्ररहिता पौरोहित्य-

शक्तिरूर्णाकीटवत् स्वयं बद्धा। यच्छृङ्खलमपरस्य पदं बन्धुं पुरुषानुक्रमेण परमयत्नेन विनिर्मितं तदेव स्वस्य गमनशक्ति शतेन वेष्टनैः प्रतिहन्ति। बाह्य-शुद्धिमभिलष्य यन्नाम सूक्ष्मानुसूक्ष्ममाचारजालं समाजस्य वज्रबन्धनार्थमतानि तस्यैव तन्तुराशिनापादमस्तकं विजडिना पौरोहित्यशक्तिर्निगताशा सती निद्रिता जाता। नास्ति कोऽप्युपायः, त्रुटितं चेदेतज् जालं तर्हि गतं पुरोहितस्य पौरोहित्यम्। ये खल्वेतस्मिन् कठोरे बन्धने स्वाभाविकाभ्युदयस्य वासनां नितरां प्रतिहतामालोक्य जालमिदं विच्छिद्य वर्णान्तरस्य वृत्तिमवलम्ब्य धनसञ्चये नियुक्तास्तेषां पौरोहित्याधिकारः समाजेन तत्क्षणादेवापहृतः। शिखाहीनस्य, विषमफालद्वय-विन्यस्त-चिकुरस्य, इउरोपीयवेषभूषाचारादिभिः सामिमण्डितस्य ब्राह्मणस्य ब्राह्मण्ये समाजो न विश्वसिति। पुनर्भारतवर्षे यत्रेदं नवागतम् इउरोपीयं राज्यं, शिक्षा, धनागमोपायश्च वितन्यते तत्रैव पुरुषानुक्रमेणा-गतां पौरोहित्यवृत्तिं परित्यज्य ब्राह्मणयुवका यूथैरेव वर्णान्तरस्य वृत्तिमाश्रित्य धनिनो भवन्ति, सममेव च पुरोहितपूर्वजानामाचारो व्यवहारश्च सम्पूर्णतया रसातलं पर्येति।

गुर्जरेषु ब्राह्मणानां मध्य एकैकस्मिन्नवान्तरे सम्प्रदाये भागद्वयमस्ति—एकः पुरोहितवृत्तिकोऽपरश्च वृत्त्यन्तरलब्धजीविकः। एष पुरोहितवृत्तिकः सम्प्रदाय-स्तस्मिन् प्रदेशे ब्राह्मण इत्यभिहितः। अपरः सम्प्रदायो यद्यप्येकस्मादेव ब्राह्मणकुलात् प्रसूतस्तथापि पुरोहिता ब्राह्मणा न तत्सम्प्रदायेन यौनसम्बन्धेनाबद्धाः। यथा 'नागर-ब्राह्मण' इत्युक्ते तस्य ब्राह्मणवर्णस्य ये भिक्षावृत्तयः पुरोहितास्त एव बोध्याः। 'नागर' इत्यनेन तद्वर्णस्य ये राजकर्मसम्पादका वैश्यवृत्तयो वा तेषामवगमः। परन्तु दृश्यतेऽ-धुना यत्तस्मिन्नपि प्रदेशे नेदृशो विभागः प्रचलति। नागरब्राह्मणस्यापि पुत्रा आङ्गल-भाषामधीत्य राजकर्मसम्पादका भवन्ति, वाणिज्यादिकं वा समाश्रयन्ति। चतु-ष्पाठीनामध्यापका बहुलं दुःखं संसह्य स्वपुत्रान् आङ्गलविश्वविद्यालयं प्रवेशयन्ति, वैद्यकायस्थादीनामपि वृत्तिं ग्राहयन्ति। यद्येवं स्रोतः प्रसरति तर्हि वर्तमानः पुरोहित-सम्प्रदायः कति दिनानि स्थास्यतीति विचारमर्हतीति नात्र संशयः। ये तु सम्प्र-दायविशेषस्य व्यक्तिविशेषस्य वोपरि ब्राह्मणवर्णस्याधिकारविच्युतिनिमित्तस्वरूपं दोष-मारोपयन्ति, विज्ञेयमेतदमीभिर्यद् ब्राह्मणवर्णः प्राकृतिकावश्यम्भाविनियमाधीनः सन्नात्मनः समाधिमन्दिरं स्वयमेव विरचयति। एष एव कल्याणमावहति—सर्वस्याप्य-भिजनस्य वर्णस्य स्वहस्तेनात्मनश्चितानिर्माणं प्रमुखं कर्तव्यम्।

शक्तेः सञ्चयो यथावश्यकस्तथा, तदपेक्षयाधिकतया वा, तस्या विकिरणमप्यावश्य-कम्। हृत्पिण्डे रुधिरं नूनं सञ्चेतव्यं किन्तु तद् यदि कृत्स्ने शरीरे न सञ्चलति तर्हि मृत्युरेव फलम्। समाजकल्याणार्थमेकदा विद्या शक्तिर्वा कस्मिंश्चन कुले वर्णे वा

केन्द्रीभवेदित्यावश्यकमेव किन्तु सा केन्द्रीभूता शक्तिः पुञ्जीकृता केवलं सर्वतः सञ्चाराय। यद्येवं न घटते तदानीं समाजशरीरं ध्रुवं क्षिप्रं मरणं समेति।

### क्षत्रियशक्तिः

अन्यतः, राजसिंहे मृगेन्द्रस्य सर्वो गुणदोषराशिर्विराजमानः। एकत आत्मभोगेच्छार्थं केसरिणः कराला नखास्तृणगुल्मभोजिनः पशुकुलस्य हृत्पिण्डस्य विदारणे न क्षणमपि संकुचन्ति; अन्यतः, कविनोच्यते यत् क्रोडागतो जम्बुकः क्षुत्क्षामेण जराजीर्णेनापि सिंहेन न भक्ष्यत्वेन गृहीतो भवति। प्रजाकुलं यदि राजशार्दूलस्य भोगेच्छां विहन्ति तर्हि तस्य सर्वनाशः; यदि तु विनीतं सद् राजाज्ञां शिरसि धारयति तर्हि विगता तस्यापत्। न केवलमेतदेव; समानः प्रयत्नः समानाऽकूतिः, सामान्यजनानां स्वत्वं रक्षितुमात्मस्वार्थस्य परित्यागो नापि पुराकाले नाप्यधुना कस्मिन्नपि देशे सम्यगुपलब्धः। राजरूपं केन्द्रं तदर्थं समाजेन सृष्टम्। शक्तिसमष्टिस्तस्मिन् केन्द्रे पुञ्जीकृता तस्माच्च स्थानात् समाजशरीरे सर्वत्र प्रसृता। यथा ब्राह्मणाधिकारे ज्ञानेच्छायाः प्रथममुद्बोधनं शैशवावस्थायां च यत्नेन परिपालनं जातं तथैव क्षत्रियाधिकारे भोगेच्छायाः पुष्टिस्तत्सहायकस्य च विद्यानिचयस्य सृष्टिरुन्नतिश्चाभूत्।

किं नाम महिमान्वितो लोकेश्वरः पर्णकुटीरे तस्योन्नतं शिरो गोपायितुं प्रभवेत्, कथं वा सामान्यजनलभ्यं भोज्यादिकं तस्य तृप्तिं साधयेत्?

नरलोके यस्य महिम्नस्तुला नास्ति, यस्मिंश्च देवत्वमारोपितं तस्योपभोग्ये वस्तुनीतरेषां दृष्टिक्षेप एव महत् पातकं किमु तत्र लिप्सा। राजशरीरं नेतरशरीरसदृशमिति तस्मिन् नाशौचादिको दोषो लिम्पति, बहुषु देशेषु तच्छरीरस्य मृत्युर्नास्ति। एतद्भावप्रभावादसूर्यम्पश्या राजदाराः सर्वतोभावेन लोकलोचनाद् गोपायिताः। अतः पर्णकुटीरस्य स्थाने समुत्थितं हर्म्यं, ग्राम्यकोलाहलस्य स्थाने मधुरं कलाकौशलविशिष्टं सङ्गीतं भुवि समागतम्। सुरम्य आराम उपवनं मनोमोहन आलेख्यनिचयो भास्कर्यरत्नावली सुकुमारं च कौषेयादिवस्त्रं शनैः पदसञ्चारेण प्राकृतिककाननस्य, जङ्गलस्य, स्थूलवेषभूषादीनां च स्थानमधिचक्रुः। लक्षाधिका बुद्धिजीविनः श्रमबहुलं कर्षणं विहाय स्वल्पश्रमसाध्यासु सूक्ष्मबुद्धेश्च रङ्गभूमिष्वसंख्यातासु कलासु मनो निदधुः। ग्रामगौरवं लुप्तम्, आविर्भूतश्च नगरम्।

भारतवर्षे पुनर्विषयभोगतृप्तो महाराजगणोऽन्ते कालेऽरण्याश्रयी सन्नध्यात्मविद्याया गभीरे विमर्शे प्रथमतया प्रवृत्तः। एतादृशाद् भोगादनन्तरं वैराग्यमवश्यम्भावि। तद्वैराग्यस्य गभीरदार्शनिकचिन्तायाश्च फलस्वरूपेणाध्यात्मतत्त्व ऐकान्तिकोऽनुरागो, मन्त्रबहुले क्रियाकाण्डे सातिशयं वितृष्णा च जाता। सर्वमेतदुपनिषत्सु गीतायां जैनबौद्धग्रन्थेषु च प्रपञ्चेन प्रचारितम्। तत्रापि भारते पौरोहित्यशक्ते राजन्यशक्तेश्च प्रावर्तत विषमः कलहः। कर्मकाण्डस्य विलोपात्

पुरोहितस्य वृत्तिनाश इति स्वतः सर्वकालस्य सर्वदेशस्य च पुरोहितः प्राचीनाया रीतेर्नीतेश्च रक्षायां बद्धपरिकरः, अपरतश्चाविद्यत शापचापोभयहस्तं जनकादि-क्षत्रियकुलम्। पूर्वमेवोक्तः स विषमो द्वन्द्वः।

यथा पुरोहितः सर्वां विद्यां केन्द्रीकर्तुं चेष्टते तथा राजापि सकलां पार्थिव-शक्तिं समाहर्तुं यतते। उभयोरप्युपकारोऽस्ति। उभयमपि कालविशेषेण समाजकल्याणार्थमावश्यकं किन्तु तच्च केवलं समाजस्य शैशवावस्थायाम्। प्राप्त-यौवनं पूर्णदेहं समाजं बाल्योपयोगिना वस्त्रेण बलादाबन्धुं यः प्रयत्नस्तेन समाज उत वा स्वतेजसा बन्धनं छित्त्वाग्रतः सरति, उत वा तत्करणासामर्थ्ये शनैः शनैरसभ्यावस्थां प्रतिपद्यते।

राजा प्रजानां पिता माता च, प्रजाश्च राज्ञः शिशवः। प्रजाः खलु सर्वथा राजमुखमपेक्षेरन्, राजा च निरपेक्षः सन्नौरससन्तानवत् प्रजाः पालयेत्। किन्तु या नीतिः प्रतिगृहं प्रयोजिता सा समाजेऽपि प्रयोज्या। समाजः खलु गृहाणां समष्टिरेव। यदि 'प्राप्ते तु षोडशे वर्षे' प्रत्येकस्य पितुः पुत्रो मित्रवदाचरणीयः स्यात्तर्हि समाजशिशुः किं न कदापि षोडशं वर्षं प्राप्नुयात्? इतिहासस्य साक्ष्यमेतद् यत् सर्वोऽपि समाज एकस्मिन् काले यौवनमुपगच्छति, सर्वस्मिंश्च समाजे प्राकृतैः पुरुषैः सह शक्तिमतां शासकानां संघर्षः समुपजायते। युद्धेऽस्मिन् जयः स्यादुत पराजयः किन्तु तदनुरूपा हि समाजस्य प्राणाः, विकासः, सभ्यता च।

भारतवर्षं धर्मप्राणं, धर्मश्चैतस्य देशस्य भाषा, सकलाभ्युदयस्य लिङ्गम्। विप्लवः पुनः पुनर्भारते संघटते, केवलमेतद्देशे स धर्मं निमित्तीकृत्य संसाधितः। चार्वाको जैनो बौद्धः शङ्करो रामानुजः कबीरो नानकश्चैतन्यो ब्राह्मसमाज आर्य-समाज इत्यखिलानां सम्प्रदायानां पुरतः फेनिलो वज्रघोषो धर्मतरङ्गः पश्चाच्च समाजनीतिगतस्याभावस्य पूरणम्। अर्थहीनशब्दनिचयोच्चारणेन यदि सर्वकामनायाः सिद्धिर्भवेत्तदा को नाम वासनातृप्त्यर्थं क्लेशकरं पुरुषकारमवलम्बेत? यदि कृत्स्ने समाजशरीरे रोगोऽयं प्रविशति तर्हि समाजः पूर्णतयोद्यमविहीनः सन् विनाशमेष्यति। अतः प्रत्यक्षवादिनां चार्वाकाणां त्वङ्मांसभेदिनस्तीक्ष्णो-पालम्भस्याविर्भावः। पशुमेध-नरमेधाश्वमेधादीनां बहुलानां कर्मणां प्राणनिष्पीडकाद् भारात् समाजं, तथा सदाचाराणां ज्ञानमात्राश्रयाणां जैनानामुच्चवर्णानां च निदारुणादत्याचाराद् निम्नस्तरस्थितं मनुष्यकुलं, बौद्धविप्लवादन्यत् किं नाम त्रायेत? कालेन यदा बौद्धधर्मस्य प्रबलः सदाचारोऽपि तीव्रस्यानाचारस्य रूपं परिजग्राह, साम्यवादातिशय्यात् स्वगृहप्रविष्टानां नानाबर्बरजातीनां पैशाचिकनृत्येन समाजः कम्पमानश्च जातस्तदा यथासम्भवं पूर्वभावं पुनः प्रापयितुं शङ्कररामानु-जाभ्यां प्रयतितम्। पुनः कबीर-नानक-चैतन्य-ब्राह्मसमाजार्यसमाज-प्रादुर्भावं विना

हिन्दूनपेक्ष्य मुसलमान-खृष्टानानां संख्या भारते प्रभूततया वर्धतेत्यत्र नास्ति लेशतोऽपि संशयः ।

नानाधातुविशिष्टस्य शरीरस्य, तथैवानन्तभावतरङ्गसमन्वितस्य चित्तस्य भोज्य-द्रव्यातिरिक्तं किं नामान्यत् प्रकृष्टमुपादानम् ? किन्तु यदेव खाद्यं देहरक्षार्थं मनोबलाधानार्थं चात्यर्थमावश्यकं तस्यैव शिष्टस्त्यक्तव्यो भागो यथाकालं शरीरादनिर्गतः सर्वानर्थमूलं भवति ।

## व्यष्टिजीवनं समष्टिजीवनं च

समष्टौ जीवितायां व्यक्तिर्जीवति, समष्टिसुखादेव व्यष्टिसुखम् । समष्टिमतीत्य व्यष्टेरस्तित्वमेवासम्भवि । इदमनन्तं सत्यं जगतो मूलभित्तिस्वरूपम् । अनन्तसमष्टि-मभिलक्ष्य तत्सहानुभूतिवशात् तत्सुखेन सुखं तद्दुःखेन दुःखमुपभुज्य शनैरग्रे गमनं व्यष्टेरेकमेव कर्तव्यम् । न केवलं कर्तव्यं किन्त्वेतस्य व्यतिक्रमे सति फलं मृत्युः, पालने त्वमरत्वम् । न हि कोऽपि प्रकृतेर्दृष्टिमावरितुं प्रभवति । समाजनेत्रमपि न सुचिरमाच्छाद्येत । उपरि य एवावर्जनाराशिः सञ्चितो भवतु तस्य स्तूपस्याधः प्रेमस्वरूपस्य निःस्वार्थसामाजिकजीवनस्य प्राणस्पन्दनं विद्यते । सर्वंसहा धरित्रीव समाजोऽतिमात्रं सहते किन्तु स खल्वद्य वाऽन्येद्युर्वा जागर्ति । तस्य चोद्-बोधनस्य वीर्येण युगान्तरसञ्चितं मालिन्यं स्वार्थपरताकूटं च दूरं निक्षिप्यते ।

तमसाच्छन्नाः पाशवप्रकृतयो वयं मनुष्याः सहस्रशः प्रतारिता अपि नैतस्मिन् सत्ये विश्वसिमः, सहस्रशः प्रतारिताः सन्तोऽपि पुनः प्रतारयितुं प्रवृत्ताः— उन्मत्तवच्चिन्तयामो यत् प्रकृतिं वञ्चयितुं वयं समर्थाः । अत्यल्पदर्शिनो मन्यामहे यद् यथा कथमप्यात्मस्वार्थसाधनमेव जीवनस्य चरमोद्देश्यम् ।

विद्या बुद्धिर्धनं जनो बलं वीर्यं यत् किञ्चित् प्रकृत्याऽस्मत्समीपे सञ्चितं तत् पुनःसञ्चारार्थमिति विस्मरामः, न्यस्ते धने स्वत्वबुद्धिर्जायते, ततश्च सर्वनाशप्रारम्भः ।

प्रजासमष्टेः शक्तिकेन्द्रस्वरूपो भूपोऽतिशीघ्रं विस्मरति यत्तस्मिन् सञ्चिता शक्तिः केवलं 'सहस्रगुणमुत्स्रष्टुम्[13] इति । वेननृपवत्[14] स स्वस्मिन् सर्वदेवत्व-मारोप्यान्यस्मिन् केवलमपकृष्टं मनुष्यत्वमात्रमवलोकयति । शोभनाऽशोभना वा यादृशी तस्येच्छा तद्व्याघात एव महापातकम् । अतः पीडनं पालनस्य स्थानमधितिष्ठति, भक्षणं च रक्षणस्य । यदि समाजो निर्वीर्यो भवति, निःशब्दं सहते, राजा प्रजा चोभौ हीनादपि हीनतरौ भवतः, झटिति जात्यन्तरस्य भक्ष्यरूपेण सम्पद्येते । यत्र समाजशरीरं बलवत्तत्र द्रागेवातिप्रबला प्रतिक्रिया समुपतिष्ठते, तदास्फालनेन च्छत्र-दण्डव्यजनादिकं सुदूरं विक्षिप्यते, सिंहासनादिकं च चित्रशालिकारक्षितः प्राचीनो द्रव्यविशेष इव भवति ।

## वैश्यशक्तिः

यस्या महाशक्तेर्भ्रूभङ्गेण 'लङ्कापुरे विलोलं विकम्पते राक्षसपतिः'[१५] यत्करधृत-सुवर्णभाण्डमभिलष्य वकाण्डप्रत्याशावद्[१६] महाराजादारभ्य भिक्षुकपर्यन्तं सर्वे वकपङ्क्तिरिव विनीतशिरसः पश्चात् प्रयान्ति, तस्या एव वैश्यशक्तेर्विकास एव पूर्वोक्तायाः प्रतिक्रियायाः फलम्।

ब्राह्मणेनोक्तं 'विद्या हि बलानां बलम्, विद्योपजीविनो मम शासनेन समाजश्चलिष्यति' इति कियन्ति दिनानि तत् प्रचलितम्। क्षत्रियः प्राह—'मदस्त्रबलं विना विद्याबलसहितस्त्वं निश्चिह्नं लुप्तो भवसीति ममैव श्रेष्ठत्वम्'। कोषे झङ्कृतोऽसिः, समाजोऽवनतमस्तकेन तदेवागृह्णात्। विद्योपासकोऽपि प्राथम्येन राजोपासको जातः। वैश्यो ब्रूते—"उन्माद, यद् 'अखण्डमण्डलाकारं व्याप्तं येन चराचरमि' त्युच्यते युष्माभिः स मुद्रारूपोऽनन्तशक्त्याधारो ममैव हस्ते तिष्ठति। पश्य, एतस्य कृपयाहमपि सर्वशक्तिमान्। हे ब्राह्मण, तव तपो जपं विद्यां बुद्धिं च सर्वमस्यैव प्रसादेन क्रेष्यामि। महाराज, तवास्त्रशस्त्रं तेजोवीर्यमेतस्यैव कृपया मदमीष्टसिद्ध्यर्थं प्रयोक्ष्यते। यदेतदतिविस्तृतमत्युन्नतं शिल्पालयकुलं दृश्यते तत् सर्वं ममैव मधुक्रमः। पश्य, असंख्याता मक्षिकासदृक्षाः शूद्रास्तत्रानवरतं मधु सञ्चिन्वन्ति, कः पुनरस्य मधुनः पाता?—अहमेव। यथाकालं कृत्स्नं मधु मयैव पश्चाद्देशाद् निष्पीड्य गृह्यते।"

ब्राह्मणक्षत्रयोराधिपत्ये यथा विद्यायाः सभ्यतायाश्चोच्चयस्तथा वैश्याधिकारे धनस्य। या रूप्यकझङ्कृतिश्चातुर्वर्ण्यस्य मनो हर्तुं क्षमा तत्र धने खलु बलं वैश्यस्य। तद्धनं ब्राह्मणेन प्रतार्य गृह्येत, क्षत्रियेण वा प्रसह्येति वैश्यस्य सदैव भयम्। अत एवात्मरक्षार्थं श्रेष्ठिकुलस्यैकमत्यम्। कुसीदकशाहस्तो वणिक् सर्वस्य हृत्कम्पमुत्पादयति। अर्थबलेन राजशक्तिं संयमयितुं वणिजोऽनिशं व्यस्ताः। यथा राजशक्तिर्वैश्यानां धनधान्यसञ्चये न कामपि बाधां जनयेत्तदर्थं वणिगनारतं चेष्टितः। पुनः शूद्रकुले तस्याः शक्तेः सञ्चारो भूयादिति न वणिजामिच्छालेशः।

कुत्र न याति पण्याजीवः? स्वयमज्ञोऽपि वाणिज्यानुरोधादेकस्य देशस्य विद्यां बुद्धिं कलां कौशलं देशान्तरं नयति नैगमः। विद्या-सभ्यता-कलाविलासरूपं यद् रुधिरं ब्रह्मक्षत्राधिकारे समाजहृत्पिण्डे पुञ्जीकृतमासीत्तदेव पण्याजीवपण्यवीथिकाभिमुख-मार्गनिचयरूपधमनीयोगात् सर्वत्र सञ्चारितं भवति। एतं वैश्यप्रादुर्भावं विना को नामैकस्य प्रान्तस्य भक्ष्यभोज्यं सभ्यतां विलासव्यसनं विद्यां चाद्य प्रान्तान्तरं नयेत्?

## शूद्रजागरणम्

येषां पुनः शरीरक्लेशेन ब्राह्मणस्याधिपत्यं क्षत्रियस्यैश्वर्यं वैश्यस्य च धनधान्यं जायते तेषां स्थानं कुत्र ? ये खलु समाजस्य सर्वाङ्गस्वरूपा अपि सर्वदेशे सर्वकाले च 'जघन्यप्रभवो हि सः' इत्युच्यन्ते कस्तेषां वृत्तान्तः ! येषां विद्यालाभेच्छारूपाद् गुरुतरापराधवशाद् भारते जिह्वाच्छेदशरीरभेदादिका॰ दयार्द्रा दण्डाः प्रचारिता भारतस्य तच्चलच्छ्मशानस्य, भारतेतरदेशस्य भारवाहिनः पशोः शूद्रवर्णस्य का गतिः ?

एतद्देशस्य कां कथां ब्रवीमि ? दूरमास्तां शूद्राणां कथा ; भारतस्य ब्राह्मण्यमिदानीं गौराङ्गेऽध्यापके, क्षत्रियत्वं राजचक्रवर्तिनि इंरेजे, वैश्यत्वमपि इंरेजस्य अस्थ्नि मज्जायां च । भारतवासिनः केवलं भारवाहिपशुत्वं, केवलं शूद्रत्वमस्ति । दुर्भेद्यं तमसावरणमधुना सर्वान् समभावेनाच्छादयति । अद्य न प्रयत्ने तेजः, नारम्भे साहसः, न मनसि बलं, नापमाने घृणा, न दास्येऽरुचिः, नापि हृदये प्रीतिर्न वा प्राणेष्वाशा ; अस्ति केवलं प्रबलेर्ष्या, स्वजातिद्वेषः, अस्ति येन केन प्रकारेण दुर्बलस्य सर्वनाशसाधने बलवतश्च कुक्कुरवत् पदलेहने प्रबलेच्छा । सम्प्रति तृप्तिरैश्वर्यप्रदर्शने, भक्तिः स्वार्थसाधने, ज्ञानमनित्यवस्तुसंग्रहे, योगः पैशाचिकाचारे, कर्म नामापरस्य दासत्वे, सभ्यता हि विजातीयानुकरणे, वाग्मित्वं कटुभाषणे भाषाया उत्कर्षो धनवतामत्यद्भुते चाटुवचने किंवा हीनाश्लीलताप्रसारे । एतस्य शूद्रपूर्णस्य देशस्य शूद्राणां का कथा ! भारतेतरदेशस्य शूद्रकुलं किञ्चिद् विनिद्रमिव । परन्तु तेषां नास्ति विद्या, अस्ति तु शूद्रसाधारणः स्ववर्णद्वेषः । संख्याधिक्येन किं स्यात् ? यादृशेनैक्येन दश पुरुषा लक्षस्य बलं संगृह्णीयुस्तादृश्येकता वर्तमाने काले दूर एव । अतः शूद्रवर्णमात्रं नैसर्गिकनियमवशात् परतन्त्रम् ।

किन्तु विद्यते ह्याशा । कालप्रभावाद् ब्राह्मणादिवर्णा अपि शूद्रस्य निम्नासनं समानीयन्ते शूद्रवर्णश्च समुच्चस्थानमुन्नीयते । शूद्रपूर्णो रोमकदास इउरोपः क्षत्रवीर्येण परिपूर्णः । महाबलश्चीनदेशोऽस्मत्समक्षं द्रुतपदसञ्चारेण शूद्रत्वं प्राप्नोति । नगण्यो जापानः खधूपतेजसा शूद्रत्वं दूरं निक्षिप्य क्रमेणोच्चवर्णाधिकारमाक्रामति । आधुनिकग्रीसस्य इतालिदेशस्य च क्षत्रतापत्तिः तुरस्कस्पेनादीनां च निम्नाभिमुखं पतनमत्र विवेच्यम् ।

तथाप्येतादृशः समय आगमिष्यति यदा शूद्रत्वसहितस्य शूद्रस्य प्राधान्यं भविष्यति । वैश्यत्वं क्षत्रियत्वं वार्जयित्वा शूद्रजातिर्बलं वीर्यं च विकासयेदिति न, किन्तु शूद्रधर्मेण शूद्रकर्मणा च सह सर्वेषां देशानां शूद्राः समाज एकाधिपत्यं लप्स्यन्ते । तस्यैव पूर्वाभासच्छटा पाश्चात्त्ये जगति मन्थरमुदेति, सर्वे च तस्य फलमफलं वा विचिन्त्य व्याकुलाः । समाजतन्त्रवाद-नैराज्यवाद-शून्यवादादयः सम्प्रदाया एतस्य विप्लवस्याग्रगामी केतुः । युगाद् युगान्तरपर्यन्तं पेषणस्य फलेन शूद्रमात्रः कुक्कुरवत्

पदलेहकोऽथवा हिंस्रपशुवन्नृशंसः। पुनरद्यापि तेषां वासना निष्फला, अतो दार्ढ्यमध्यवसायो वा तेषां नास्त्येव।

पाश्चात्यदेशे शिक्षाविस्तारे सत्यपि शूद्रवर्णस्याभ्युत्थानस्यास्ति महान् प्रत्यवायो यत्तत्र वर्णविभागो गुणगतः। गुणतो वर्णविभागः प्राचीने कालेऽस्मिन्नपि देशे प्रचरन् दृढबन्धनेन शूद्रकुलं बबन्ध। शूद्रवर्णस्य स्वतो विद्यार्जनस्य धनसंग्रहस्य च सौकर्यं स्वल्पं तत्रापि यदि कदापि कोऽप्यसामान्यपुरुषो जातः शूद्रकुले तदाभिजनसमाजस्तत्क्षणात् तं जनमुपाधिना विभूष्य स्वमण्डल उत्तोलयति। तस्य विद्यायाः प्रभावः, धनस्य भागोऽपरं वर्णमुपकरोति, स्ववर्णस्तु तस्य विद्यां बुद्धिं धनं वा न किञ्चिल्लभते। न केवलमेतदेव किन्तूपरितनवर्णस्यावर्जनाराशिरूपा अकर्मण्या मनुष्या शूद्रवर्गे निक्षिप्यन्ते।

वारवनितापुत्रो वसिष्ठः[१८], नारदः, दासीपुत्रो जाबालः सत्यकामो, धीवरो व्यासस्तथाज्ञातपितृकाः कृप-द्रोण-कर्णादयः सर्व एव विद्याया वीरत्वस्य वाधार इति ब्राह्मणत्वं क्षत्रियत्वं वोन्नीताः। तेन वाराङ्गनाया दास्या धीवरस्य सूतस्य वा कुलस्य को लाभः समजनीति विचारमर्हति। ब्राह्मणक्षत्रियवैश्यकुलेभ्यः पतिताः पुरुषाः सततं शूद्रकुलं समानीताः।

अद्यतने भारते शूद्रकुलोत्पन्नस्य महापण्डितस्य कोटीश्वरस्य वा स्ववर्णत्यागे नाधिकारोऽस्ति। अतस्तेषां विद्याबुद्धिधनादीनां प्रभावः स्ववर्णमभिगतः स्वमण्डलाभ्युदयार्थं प्रयुज्यते। एवमेव भारतस्य जन्मगतो वर्णो मर्यादातिक्रमणासमर्थो वृत्तमध्यगानां सर्वेषां जनानां शनैरुन्नतिं विदधाति। यावच्च भारते वर्णनिर्विशेषेण दण्डपुरस्कारादिकं विदधन्नृपो वर्त्स्यति तावदेवं नीचवर्णस्योन्नतिः प्रचलिष्यति।

समाजस्य नेतृत्वं विद्याबलेनैवाधिकृतं भवतु, उत वा बाहुबलेनाथवा धनबलेन—तच्छक्तेराधारः प्रजापुञ्जः। यो नेतृसम्प्रदायो यावदेव ह्येतस्माच्छक्त्याधारादात्मानं विश्लेषयिष्यति तावदेव हि स दुर्बलो भविष्यति। किन्तु विचित्रं खेलति खलु माया—यत्समीपात् परोक्षं प्रत्यक्षं वा छलबलकौशलेन, प्रतिग्रहेण वैषा शक्तिः परिगृहीता त एवाचिरान्नेतृसम्प्रदायेन न विगण्यन्ते। पौरोहित्यशक्तिः कालक्रमेण शक्त्याधारात् प्रजापुञ्जादात्मानं सम्पूर्णतया विच्छिद्य तात्कालिकेन प्रजासहायेन राजबलेन पराभूता; राजशक्तिरप्यात्मानं पूर्णतया स्वतन्त्रां मन्यमाना प्रजाकुलमात्मानं चान्तरा दुस्तरां परिखां खनित्वा ततोऽप्यधिकतया सामान्यप्रजासहायेन वैश्यकुलेन निहता वा क्रीडनकस्वरूपा वा जाता। सम्प्रति वैश्यकुलमात्मस्वार्थं साधितवत्; अतः प्रजासाहाय्यमनावश्यकमिति मत्वाऽऽत्मानं प्रजापुञ्जात् कार्त्स्न्येन विच्छेत्तुं प्रयतते। अत्रैतस्याः शक्तेर्मृत्युबीजमुप्तम्।

सामान्याः प्रजाः कृत्स्नशक्तेराधारोऽपि मिथोऽनन्तं व्यवधानं संसृज्य स्वानेव

सर्वाधिकाराद् वञ्चयमाना विद्यन्ते, यावच्चैवं भावः स्थास्यति तावद् वञ्चिता भविष्यन्ति। समाना विपद् घृणा प्रीतिश्च सहानुभूतेः कारणम्। पशुभोजिनः पशवो यन्नियमाधीनाः सन्तो मिलिता भवन्ति तेनैव नियमेन मनुजा अपि मिलिताः, जातौ देशवासिषु च परिणता भवन्ति।

ऐकान्तिकं स्वजातिवात्सल्यमैकान्तिकश्च इरानविद्वेषो ग्रीकजातेः, कार्थेज-विद्वेषो रोमस्य, काफेर-विद्वेष आरबजातेः, मुरविद्वेषः स्पेनस्य, स्पेनविद्वेषः फ्रान्सस्य, फ्रान्सविद्वेष इंलण्डस्य जार्मानेश्च, इंलण्डविद्वेषश्च आमेरिकायाः प्रतिद्वन्द्वितां समाधायोन्नतेः प्रधानं कारणं भवतीति निश्चितम्।

स्वार्थ एव स्वार्थत्यागस्य प्रधानः शिक्षकः। व्यष्टिस्वार्थरक्षणाय हि समष्टि-कल्याणं प्रति प्रथमतया दृष्टिर्निक्षिप्ता। स्वजातेः स्वार्थे प्रपूरिते स्वस्वार्थः सिद्धः, स्वजातेः कल्याणे सत्यात्मकल्याणम्। बहूनां साहाय्यं विना प्रायः सर्वाणि कार्याणि न कथमपि सिध्यन्ति, आत्मरक्षाप्यसम्भविनी। स्वार्थरक्षार्थं सहकारित्वं सर्वदेशे सर्वजातौ च विद्यमानम्। किन्तु स्वार्थपरिधेस्तारतम्यमस्ति। प्रजोत्पादने, येन केन च प्रकारेणोदरपूरणे च सिद्धे भारतवासिनः स्वार्थः सिद्ध एव; उच्चवर्णानां त्विदमतीत्य निर्बाधो धर्मोऽप्यपेक्षितः। एतदतिरिच्य वर्तमाने भारते नास्ति दुराशा ; पुनरेतदेव भारतजीवनस्योच्चतमं सोपानम्।

भारतवर्षे सम्प्रति प्रचलितायां शासनप्रणाल्यां केचन दोषा विद्यन्ते, गुणाश्च सन्त्येव केचन। सर्वस्मादपि कल्याणतममेतद् यत् पाटलिपुत्रसाम्राज्यस्य पतना-दारभ्य साम्प्रतिककालपर्यन्तमेतादृशं शक्तिमत् सर्वव्यापि च शासनयन्त्रं नास्मद्देशे परिचालितम्। वैश्याधिकारस्य यस्मात् प्रयासवशादेकस्मात् प्रान्तात् प्रान्तान्तरं पण्यद्रव्यमुपनीयते तस्मादेव प्रयासाद् देशस्य देशान्तरस्य च भावराशिर्बलादेव भारतस्यास्थनि मज्जायां च प्रविष्टः। एतेषु भावेषु केचन परमकल्याणकराः, कतिचिदमङ्गलस्वरूपाः, पुनः केचन परदेशवासिनामेतद्देशीययथार्थकल्याण-निरूपणाज्ञतां प्रख्यापयन्ति।

किन्तु गुणराशिं भित्त्वा निखिलभविष्यन्मङ्गलस्य प्रबलं लिङ्गं दर्शनपथमायाति यदेतद्विजातीयस्य प्राचीनस्वजातीयस्य च भावस्य संघर्षात् स्वल्पं स्वल्पं दीर्घसुप्ता जातिर्विनिद्रा भवति। भ्रान्तिरस्तीति क्षतिर्नास्ति यतः कृत्स्नेषु कर्मसु भ्रम-प्रमादावस्मच्छिक्षकौ। यो भ्रमवशः स ऋतं प्राप्नोति। पादपो न भ्रान्तः नापि प्रस्तरखण्डः, पशुकुले च नियमवैपरीत्यमीषद् दृश्यते तथापि भूदेवस्योत्पत्तिर्भ्रम-प्रमादपूर्णे नरकुल एव। दन्तधावनाद् मृत्युपर्यन्तं समग्रं कर्मजालं, स्वापभङ्गात् पुनः शयनपर्यन्तं सर्वा चिन्ता यद्यपरैरस्मदर्थं सूक्ष्मातिसूक्ष्मरूपेण निरूप्य दीयते, राजशक्तेः पेषणाच्च यदि वयं नियमरूपैर्वज्रबन्धनैर्वेष्टितास्तर्हि नश्चिन्तनीयं किं वाव-

शिष्यते ? मननादेव हि वयं मनुष्या मनीषिणो मुनयश्च । चिन्ताशीलत्वं चेल्लुप्तं, प्रादुर्भूतं तर्हि तमो जडत्वं च । अधुनापि सर्वे धर्मनायकाः समाजनेतारश्च समाजस्य कृते नियमप्रणयने व्यस्ताः !!! किं वा देशे नियमाभावो जातः ? नियमपेषणाद्धि सर्वनाशः समुत्पन्न इति को विजानीयात् ?

पूर्णस्वाधीनस्य स्वेच्छाचारिणो राज्ञो राजत्वे विजिता जातिर्न तथा घृणापात्रम् । अप्रतिहतशक्तेः सम्राजो निखिलाः प्रजाः समानाधिकाराः, न ह्येकस्या अपि प्रजाया राजशक्तिनियमनेऽधिकारो विद्यते । तत्र जात्यभिमानजनितो विशेषाधिकारः स्वल्प एव भवति । यत्र तु प्रकृतिभिर्नियमितो राजा, प्रजातन्त्रेण वा विजिता जातिः शासिता भवति तत्र विजेतृविजितयोः सुमहद् व्यवधानमुत्पद्यते । तत्र च या शक्तिर्विजितकल्याणे नियुक्ता सती स्वल्पेन कालेन विजितानामशेषकल्याणं साधयितुं प्रभवति तस्या एव शक्तेर्बृहत्तरो भागो विजितजातिं स्ववशे स्थापयितुं प्रयुक्ते प्रयासे किंवा तदर्थमायोजने वृथा व्ययितो भवति । प्रजातन्त्राधिष्ठितं रोमदेशमपेक्ष्य सम्राडधिष्ठिते रोमकशासने विजानीयप्रजानामत एव सुखाधिक्यमासीत् । अतश्च विजितयाहुदीवंशसम्भूतोऽपि खृष्टधर्मप्रचारकः पौलः ( St. Paul ) केशरिसम्राजः ( Caesar ) समक्षं स्वापराधविचाराधिकारं लेभे । व्यक्तिविशेषः कश्चन इंरेजो यद्यस्मान् कृष्णवर्णा इति नेटिभा इति यद्वाऽसभ्या इत्यवजानाति तर्हि तत्र नास्ति हानिर्वृद्धिर्वा । अस्मासु परस्परमेतदपेक्षया भूयसी वर्णगता जुगुप्सा वरीवर्ति । मूर्खः क्षत्रियश्चेत् सहायस्तर्हि ब्राह्मणाः शूद्राणां जिह्वायाश्छेदनं शरीरस्य भेदनं च न पुनः करिष्यन्तीति को ब्रूयात् ? आर्यावर्तस्य प्राच्ये खण्डे योऽयं सर्ववर्णेषु समाजोन्नयनार्थं कियान् सद्भावो दृश्यते, महाराष्ट्रेषु च ब्राह्मणा 'माराठा' जातेः यां किल स्तुतिं प्रारब्धवन्तः, न खल्वसौ निःस्वार्थभावसमुत्थ इति निम्नवर्णैर्मन्यते । किन्तु इंरेजसामान्यस्य मनसि क्रमेणैतादृशी बुद्धिरुपजायते यद् भारतसाम्राज्यं तदधिकारच्युतं चेत्तर्हि इंरेजजातेः सर्वनाशः समुत्पत्स्यत इति । अतो येन केन प्रकारेण भारते इंलण्डाधिकारः प्राबल्येन संस्थापनीयः । एतस्या अधिकाररक्षाया मुख्योपायो भारतवासिनां हृदये इंरेजजातेः 'गौरवम्' सदा जागरूकतया संस्थापनीयमिति तेषां मतिः । एतस्या बुद्धेः प्रबलता, तस्याश्च सहयोगिनो यत्नस्योत्तरोत्तरा वृद्धिर्दृष्टा सती युगपद्धास्यं करुणरसं च जनयति । मन्ये भारतनिवासी इंरेजो विस्मरति यद्, यद्वीर्यं यच्चाध्यवसायं यां च स्वजातेरैकान्तिकीं सहानुभूतिमाश्रित्य तैरेतद् राज्यमुपार्जितं यस्माच्च सदाजागरूक-विज्ञानसहाय-वाणिज्य-बुद्धिबलात् सर्वधनप्रसूर्भारतभूमिरपि इंलण्डस्य प्रधाना पण्यवीथिका सञ्जाता, यावदेव हि जातीयजीवनादेतस्य गुणराशेर्विलोपो न भवेत्तावत्तेषां सिंहासनमचलम् । एतत् सर्वं गुणजातं यावत् इंरेजानां मध्ये वर्तिष्यते तावद् भारतसदृशानां राज्यानां

शतानि लुप्तान्यपि शतानि पुनरर्जयिष्यन्ते। यदि त्वेतद्गुणप्रवाहवेगो मन्दीभूतस्तदा किं मुधा गौरवघोषणेन राज्यं शासितं भविष्यति? अत एतद्गुणप्राबल्यसत्त्वेऽपि निरर्थकस्य 'गौरवस्य' रक्षार्थमेतादृशः शक्तिक्षयो व्यर्थः। एषा शक्तिः प्रजाकल्याणे नियोजिता सती शासकशासितयोरुभयोर्मङ्गलं ध्रुवमावहेत्।

## प्राच्यपाश्चात्त्ययोः संघर्षः

उक्तमधस्ताद् यद् बाह्यजात्या सह संघर्षेण भारतं क्रमेण विनिद्रं भवति। अस्याः स्वल्पाया जागरूकतायाः फलस्वरूपं स्वाधीनचिन्तायाः कियानुन्मेषः। एकतः प्रत्यक्षशक्ति-संग्रहरूप-प्रमाण-वाहनस्य, शतसूर्यज्योतिष आधुनिकपाश्चात्त्यविज्ञानस्य दृष्टिप्रतिघातिनी प्रभा; अन्यतः स्वदेशि-विदेशि-मनीषिकुल-समुद्घाटितं, युगाद् युगान्तरं समानानुभूतिवशात् सर्वशरीरे क्षिप्रसञ्चारि, बलदमाशाप्रदं च पूर्वपुरुषाणामपूर्वं वीर्यममानुषी प्रतिभा, देवदुर्लभा चाध्यात्मतत्त्वकथा। एकतो जडविज्ञानं प्रचुरं धनं धान्यं च, प्रभूतो बलसञ्चयस्तीव्रमिन्द्रियसुखं च विजातीयया भाषया महाकोलाहलं जनयति; अन्यतो महान्तमेतं कोलाहलं निर्भिद्य क्षीणेन मर्मभेदिना स्वरेण प्राक्तनानां देवानामार्तनादः कर्णयोः प्रविशति। पुरतो विचित्रं यानं, विचित्रं पानं, सुसज्जितं भोजनं, विचित्र-वेष-विमण्डिता निर्लज्जा विदुष्यो नार्यः, नूतनो भावः, नूतना भङ्गी चापूर्वां वासनामुत्पादयति; पुनरन्तरान्तरा तद्दृश्यमन्तर्हितं भवति, तत्राविर्भवति च व्रतोपवासः, सीता, सावित्री, तपोवनं, जटा, वल्कलं, काषायं, कौपीनं, समाधिरात्मानुसन्धानं च। एकतः पाश्चात्त्यसमाजस्य स्वार्थपरा स्वाधीनता, अन्यत आर्यसमाजस्य कठोरमात्मबलिदानम्। अस्मिंस्तुमुले संघर्षे समाजस्यान्दोलनं नैव विचित्रम्। पाश्चात्त्यस्योद्देश्यं हि व्यक्तिगता स्वाधीनता, भाषा चार्थकरी विद्या, उपायो नाम राष्ट्रनीतिः। भारतस्योद्देश्यं खलु मुक्तिः, भाषा नाम वेदाः, उपायश्च त्यागः। वर्तमानभारतमेकदा विजानातीव यद् वृथा भविष्यदध्यात्मकल्याणमोहग्रस्तं सदिहलोकस्य सर्वनाशं विदधामि, पुनः शृणोत्यपि मन्त्रमुग्धवत्—'इति संसारे स्फुटतरदोषः कथमिह मानव तव सन्तोषः।'[१९]

एकतो नव्यभारतभारतो कथयति—पति-पत्नीनिर्वाचनेऽस्माकं पूर्णा स्वाधीनता स्याद् यतो यो नामोद्वाहोऽस्माकं जीवनस्य सुखदुःखयोर्मूलं तं वयं स्वेच्छाप्रणोदिता वृणुमः; अन्यतः प्राचीनभारतस्यादेशः—न हीन्द्रियसुखार्थमुपयमः, किन्तु प्रजोत्पादनार्थम्। एवं खल्वस्य देशस्य विचारः। प्रजोत्पादनेन समाजस्य भविष्यन्मङ्गलामङ्गलं त्वयि निर्भरम्, अतो यया प्रणाल्या विवाहे कृते समाजस्य परमं कल्याणं स्यात् सैव समाजे प्रचलिता। बहूनां हिताय स्वसुखभोगेच्छां परित्यज!

एकतो नव्यभारतेनोच्यते—पाश्चात्त्यभाव-भाषाहार-परिच्छदाचारावलम्बनेनैव वयं पाश्चात्त्यजातिसदृशा बलवीर्यसम्पन्नाः स्याम ; अन्यतः प्राह प्राचीनभारतम्—मूर्ख ! नानुकरणेनान्यगतो भाव आत्मीयो भवति, नार्जनं विना किमपि वस्तु स्वकीयं भवति ; न हि सिंहचर्मावृतो गर्दभः सिंहो भवति ।

एकत आह नव्यभारतम्—पाश्चात्यजातिभिर्यदनुष्ठीयते तत् सर्वं शोभनम् ; यदि न शोभनं तर्हि कथं तासामीदृशं प्राबल्यम् ? अन्यतो ब्रूते प्राचीन-भारतम्—अतिप्रबलापि विद्युत्प्रभा क्षणं तिष्ठति ; बाल, चक्षुस्ते प्रतिहतम्, अतः सावधानो भव ।

तत् किं नास्त्यस्माभिः पाश्चात्त्यसकाशात् किञ्चिदपि शिक्षणीयम् ? अपि वाऽस्माकं यत्नैर्नास्ति प्रयोजनम् ? किं वयं सम्पूर्णाः स्मः ? अपि नः समाजः सर्वथा निश्छिद्रः ? शिक्षणीयं प्रभूतमस्ति, आमरणं यत्न आस्थेयः, यत्नो हि मानव-जीवनस्योद्देश्यम् । श्रीरामकृष्णो ब्रुवन्नासीत्—'यावज्जीवनं तावत् पठनम्' । यस्या व्यक्तेर्यस्य च समाजस्य शिक्षणीयं नावशिष्टं तस्य मृत्युः समापतितः । शिक्षणीयम-प्यस्ति, भयमप्यस्ति ।

कश्चिदल्पबुद्धिर्बालकः श्रीरामकृष्णस्य समक्षमनिशं शास्त्रं निनिन्द । एकदा गीतां प्रशंसन्तं तमालोक्य श्रीरामकृष्णेनोक्तम्—'मन्ये, केनचन इंरेजविदुषा गीता प्रशंसितेति तेनापि प्रशंसा कृता ।'

हे भारत, इयमेव प्रबला विभीषिका । पाश्चात्त्यानुकरणमोहः खल्वेवं प्रबलो भवति यत् किं हितमहितं वेति ज्ञानं बुद्धिश्च नेदानीं विचारशास्त्रेण विवेकेन वा निष्पद्यते । यो भावो यश्चाचारः श्वेताङ्गैः प्रशस्यते स एव साधुः, यश्च तैर्निन्द्यते स मन्दः । अहो भाग्यम्, एतदपेक्ष्य का नाम निर्बुद्धिता भवितुमर्हति ?

प्रतीच्या नारी स्वैरं विचरति, अतस्तद् भद्रम् । पाश्चात्त्या रमणी स्वयंवरेति तदेवोन्नतेश्चरमं सोपानम् । अस्मद्वेष-भूषाशन-वसनं पाश्चात्त्यानां घृणास्पद-मित्येतदशोभनम् । पाश्चात्त्यैर्मूर्तिपूजनं दोषावहमित्यास्थीयत इति तद् दूष्यं, कोऽत्र सन्देहः ?

प्रतीच्यैरेकदेवपूजा मङ्गलप्रदेत्युच्यत इत्यस्मद्देवा देव्यश्च गङ्गाम्भसि निक्षिप्य-न्ताम् । पाश्चात्त्यैर्वर्णभेदो घृणित इति कृत्स्ना वर्णा एकीकृता भवन्तु ! पश्चिम-देशीयैर्बाल्यविवाहः सर्वदोषाकर इत्युच्यत इति सोऽपि मन्दोऽवश्यमेव ।

आचारा इमे रक्षणार्हास्त्यागयोग्या वेति नास्माभिश्चिन्त्यते किन्तु पाश्चात्त्या-नामवज्ञादृष्टिमात्रमेव यद्यस्माकं रीतीनां नीतीनां च निकृष्टतमत्वे मानं स्यात्तदानीं प्रतिवादोऽवश्यकर्तव्यः ।

प्रस्तुतस्य लेखकस्य पाश्चात्त्यसमाजविषयकं किञ्चित् प्रत्यक्षं ज्ञानमस्ति । तस्माच्चेत्थं बोधो जातो यत् पाश्चात्त्यभारतसमाजयोर्मूलीभूतायां गत्यामुद्देश्ये चैतावत् पार्थक्यमस्ति यत् पाश्चात्त्यानुकरणमूलकः सम्प्रदायमात्रोऽत्र देशे निष्फलो भविष्यतीति । ये खलु पाश्चात्त्यसमाजे कदापि वासं विनैव, पाश्चात्त्यसमाजस्य स्त्रीजातेः पावित्र्यरक्षार्थं प्रचलितं स्त्रीपुरुषसंमिश्रणनियमं तद्बाधां चाज्ञात्वा स्त्रीपुंसयोरबाधमिश्रणासङ्गमनुमोदन्ते तैः साकमस्मदनुभूतेर्नाणुमात्रमपि साम्यं विद्यते । पाश्चात्त्येऽपि देशे दृष्टमेतद् यद् दुर्बलजातेः सन्ताना यदि इंलण्डे जातास्तदानीमात्मनः स्पानियार्ड-पोर्तुगीज-ग्रीकादीननभिधाय स्वयम् इंरेजा इति परिचिता भवन्ति ।

बलवन्तं प्रति सर्वे धावन्ति । गौरवान्वितस्य गौरवच्छटा स्वगात्रे कथमपि कियत्यपि संसक्ता भवत्विति दुर्बलमात्रस्यैवेच्छा । यदा भारतवासिनम् इउरोपीयवेषैर्भूषितं पश्यामि तदा विचिन्त्यते — पद्भ्यां मृदितेन, विद्याहीनेन, दरिद्रेण भारतवासिना सहात्मनः सजातीयत्वं स्वीकर्तुमपि लज्जितः !! वर्षाणां चतुर्दश शतानि व्याप्य हिन्दुरक्तेन पारिपालितः पार्सी नाधुना 'नेटिभ' इत्याख्यायते । जातिहीनस्य ब्राह्मणम्मन्यस्य ब्राह्मण्यगौरवस्य समीपं महारथस्य कुलीनस्य ब्राह्मणस्यापि वंशमर्यादा विलीना भवति । अहो पाश्चात्त्यैरधुना शिक्षिताः स्मः — कटितटमात्रावृता अज्ञा मूर्खा नीचवर्णाः किलानार्याः !! न तेऽधुनास्मदीयाः !!!

## स्वदेशमन्त्रः

हे भारत, अयं परानुवादः, इदं परानुकरणम्, इयं परमुखापेक्षा, इयं दाससुलभा दुर्बलता, इयं च घृणिता जघन्या निष्ठुरता—किमेतन्मात्रमवलम्ब्य त्वमुच्चाधिकारं लप्स्यसे ? किमेतां लज्जाकरीं कापुरुषतामाश्रित्य त्वं वीरभोग्यां स्वाधीनतां लप्स्यसे ? हे भारत, मा विस्मर — तव स्त्रीजातेरादर्शः सीता, सावित्री, दमयन्ती ; मा विस्मर—तवोपास्य उमानाथः सर्वत्यागी शङ्करः ; मा विस्मर — तवोद्वाहस्तव धनं तव जीवनं च नेन्द्रियसुखार्थं न वा आत्मशर्मणे ; मा विस्मर—त्वमाजन्म 'मातुः' कृते बलिप्रदत्तोऽसि ; मा विस्मर — तव समाजस्तस्या विपुलाया महामायायाश्छायामात्रम् ; मा विस्मर—नीचजातिर्मूर्खो दरिद्रो ज्ञानहीनश्चर्मकारो मलवाहीति सर्वः खलु तव शोणितं तव सोदरः । रे वीर, साहसमवलम्बस्व ; सदर्पं ब्रूहि—अहं भारतवासी, भारतवासी मे सहोदरः । ब्रूहि — मूर्खो भारतवासी, दरिद्रो भारतवासी, ब्राह्मणो भारतवासो चण्डालो भारतवासी मम सोदरः ; त्वमपि कटिमात्रवस्त्रावृतः सन् सदर्पमाहूय ब्रूहि—भारतवासी मे सहोदरः, भारतवासी मे प्राणाः, भारतस्य देवदेव्यौ ममेश्वरौ, भारतस्य समाजो मे शिशुशयनं, मम यौवनस्योपवनं, मम वार्धकस्य वाराणसी, ब्रूहि भ्रातः—भारतस्य मृत्तिका मे स्वर्गः, भारत-

कल्याणं मम कल्याणम्; ब्रूहि चाहर्निशम्—'हे गौरीनाथ, हे जगदम्ब, देहि मे मनुष्यत्वम्; मातः, अपसारय मे दुर्बलतां कापुरुषतां च, कुरु मां मानुषम्।'

इति विद्वत्समाजशिरोभूषणमहामहोपाध्याययोगेन्द्रनाथश्रीचरणान्तेवासिना पण्डितप्रवरश्रीमदानन्दगोपालगोस्वामिदेवशर्मणस्तनुजेन संस्कृतशिक्षाकेन्द्रभूतनवद्वीपधामवास्तव्येन श्रीविष्णुप्रियापरिवारसम्भूतेन माधवाचार्यवंशजेन सीतानाथदेवशर्मणा कृतः स्वामिविवेकानन्द-रचितस्य 'वर्तमानभारत' स्यानुवादः समाप्तः।

---

# टिप्पनी

३ 'राजृ दीप्तौ' इति धातोर्निष्पन्नत्वाद् दीप्यमानः सोम इत्यर्थः।

४ महाकविना कालिदासेन रघुवंशे महाकाव्य एतन्नामकः कश्चनात्यन्तमिन्द्रियपरायणो नृपो वर्णितः। स चानिशमन्तःपुरे निवसन् केवलं गवाक्षविवरेण चरणमात्रं प्रजाभ्यः प्रादर्शयत्। यक्ष्मरोगेण च तस्य मरणमभूत्।

५ आदौ क्रौर्यवशाच्चण्डाशोक इत्यभिधानं लेभे, पश्चाच्च बौद्धधर्मदीक्षितो धर्मानुरक्तो धर्माशोक इति भुवि प्रथितः।

६ हूनराजः। खृष्टीये षष्ठे शतके यशोधर्मणा पराभूतः।

७ शकराजगणः।

८ Sumerians

९ Babylonian

१० Chaldeans

११ Iranians

१२ चीनदेशीयो धर्मप्रचारकः—Confucius

१३ रघुवंशम् १/१८

१४ सर्वेभ्यो देवेभ्योऽप्यहं श्रेयानिति चिन्तयन् कश्चन नृपतिः। देवानवमानयन्नयं देवानां कोपानलेन निहतः। तस्यैव पुत्रः पृथुर्विष्णोरवतार इति ख्यातः।

१५ अत्र वङ्गभाषायामुद्धृता पङ्क्तिः—'थरथरि रक्षनाथ काँपे लङ्कापुरे'। मधुसूदनलिखितस्य मेघनादवधकाव्यस्य तृतीयसर्गे तत्सदृशी काचन पङ्क्तिर्विद्यते—'थरथरि रक्षोनाथ काँपे सिंहासने'।

१६ यथा वका वृषस्य लम्बमानमण्डकोषं मत्स्य इति विचिन्त्य तद्विच्युतिकामनया वृषमनु वृथैव धावन्ति तद्वत् कस्याप्यसम्भाव्यवस्तुनो मुधाभिकाङ्क्षा वकाण्डप्रत्याशेति वदन्ति न्यायविदः।

१७ ब्रह्मसूत्रभाष्ये ( १/३/३८ ) शङ्कराचार्येणोद्धृतम्—'अथास्य वेदमुपश्रण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्।'

१८ ऋक् सं ७/३३/११-१३

१९ शङ्कराचार्यकृतो मोहमुद्गरः, श्लोकः ५

For the first time Swamiji's work has been translated into Sanskrit.

# VARTAMANA BHARATAM

*In Excuse of Translation into Sanskrit*

"The ideas must be taught in the language of the people; at the same time, Sanskrit Education must go on along with it, because the very sound of Sanskrit words gives a prestige and a power and a strength to the race.......Even the great Buddha made one false step when he stopped the Sanskrit language from being studied by the masses .. ....He spoke in the language of the people···It spread the ideas quickly... But along with that, Sanskrit ought to have spread. Knowledge came but the prestige was not there, culture was not there. It is the culture that withstands shocks, not a simple mass of knowledge."— **Swami Vivekananda.**

**Other Works of Dr Sitanath Goswami**

1. Vedantadarsane Paramarthatattva — Rs. 8·00
   ( A thesis approved for D. phil. Degree )
2. Bharate Goraksa ( A thesis approved for Rani Ramrakshi Research Prize & Gold Medal) — Re. 1.00
3. Isopanisad ( Revised Second Edition ) — Rs. 3.50
4. Kenopanisad — Rs. 5.50
5. Tattvasandarbha
   (*Jadavpur University Sanskrit* **Series No. 1**) — Rs. 6.00
6. Swamijir Hindurastracinta — Rs. 2.50
7. Pracya-Pascattyam — Rs. 6.00
8. Philosophy of Kalidasa ( In the press )

Works
of
Dr Sitanath Goswami
Reader, Jadavpur University

**Vedantadarsane Paramarthatattva**
(thesis for D. Phil. Degree)

**Bharate Goraksha**
(thesis for Rani Ramrakshi Research Prize & Gold Medal)

**Isopanisad**
(Revised Second Edition) With Eng. Tran., Notes, Beng. Tran., Exposition, Editor's Own Commentary Etc.

**Kenopanisad**
With Eng. Tran., Notes, Exposition in Eng. & Beng. Beng. Tran., Editor's Own Commentary etc.

**Tattvasandarbha**
(Published by J. U.) Critically edited with Notes, Introduction, Index etc.

**Svamijir Hindurastracinta**
A collection of Swamiji's message and observations

**Pracya-Pascattyam**
Sanskrit Translation of Svamiji's Original Bengali Work 'Prācya O Pāscattya'

**Vartamana-Bharatam**
Sans. Tran. of Svāmiji's Original Beng. Work, 'Vartaman Bharat'.

**Philosophy of Kalidasa**
(In the Press)

To be had of—
Sanskrit Pustak Bhandar
38, Bidhan Sarani